# सामवतम्



नाटकम्।

काशीवासिना साहित्याचार्यश्रीमदम्बिका-
दत्तव्यासेन विरचितम्,

धन्यमान्यवदान्यधैर्यौदार्यगाम्भीर्याद्यनेकगुणगणसंवलितमहा-
राजाधिराजमिथिलेश्वरश्रीलक्ष्मीश्वरसिंहवीरवरस्यकरकमलयोः
समर्पितंच।

"द्राक्षा सङ्कुचिता जाता शर्करा पादताडिता।
सुभाषितरसस्याग्रे सुधा भीता दिवं गता॥"



पाटलिपुत्रे (बांकीपुरे)
खड्गविलास यन्त्रालये साहब प्रसाद सिंहेन मुद्रितम्.
१८८८.

# सामवतम्



नाटकम् ।

काशीवासिना साहित्याचार्यश्रीमदम्बिकादत्त-
व्यासेन विरचितम्,

धन्यमान्यवदान्यधैर्यौदार्यगाम्भीर्याद्यनेकगुणगणसंवलितमहा-
राजाधिराजमिथिलेश्वरश्रीलक्ष्मीश्वरसिंहवीरवरस्यकरकमलयोः
समर्पितं च ॥

"द्राक्षा सङ्कुचिता जाता शर्करा पादताडिता ।
सुभाषितरसस्याग्रे सुधा भीता दिवं गता ॥"

पाटलिपुत्रे खड्गविलास यन्त्रालये मुद्रितम्.

१८८८.

## ॥ उपोद्घातः ॥

नन्दानन्द मुकुन्द सुन्दरतनो वृन्दारकैर्वन्दित,
स्वच्छन्द व्रजसुन्दरीव्रत विभो सर्वेन्दिरामन्दिर ।
इत्यं कीर्त्तनमात्रतो विचलितः पायात् स कश्चित्सतां,
सान्द्रानन्दमदोदितो दुरितहा वाष्पाम्बुविन्दुः सदा ॥ १ ॥

अस्ति वसुमतीविदितकीर्त्तिर्मुनिजनमानिता दिगन्तदन्तावलदन्तच्छुरितयशश्चन्द्रचन्द्रिका काचिन्मिथिलाभूमिः । यां हि चरणचालनेनेव गङ्गा गण्डकी कौशिकी च सततं सेवते । यस्या एव च रसालसालाक्रोड़क्रोड़क्रीड़ाकौतुकिकोकिलकलकलकलितलोभां शोभां रजतगिरिशिखरमहिमहिममण्डितमुकुटो हिमालयोऽपि उन्नमय्य शिखरशिरः प्रतिक्षणमवलोकयतीव । यां चानेकनदीतीरभुक्तामऽवधार्य तीरभुक्तिदेशोयमिति गायन्ति कवयः । यस्यां च अनवरताकर्णनजातसंस्कारभारमुखराः पक्षिणोऽपि क्वचिद् विद्यापतिविरचिता गीतीरिव गायन्ति, क्वचित् पीलुपाकवाद्यादिमतानीव विवेचयन्ति, क्वचिद् गोकुलनाथोपाध्यायधर्मशास्त्राणीव पठन्ति, क्वचिद् भांखीझाविलिखितपाणिनीयटिप्पणीरिव आम्रेडयन्ति, क्वचित् मनबोधप्रणीतहरिवंशमिव श्रावयन्ति, क्वचित् पक्षधरलिखितफक्किका इव घोषयन्ति, क्वचिच्च सुमधुरस्वरेण तत्सुतस्तत्सुत इति पञ्जिकाकारपञ्जिका इव रटन्ति । यस्यां चाऽधुनाऽपि अशेषविद्यानिलयः परमसाननीयो दिगङ्गनागीयमानमानमर्यादो महात्मा, मूर्त्तमिव कारुण्यं, धृताकारमिव धैर्यं, राशकृतमिव गाम्भीर्यं समुड्डयमानपाण्डित्यपताकः श्रीमान् झोपाह्वः कन्हाईशर्म्मा प्रतिवसति । यत्र च पण्डितवरान् श्री—विश्वनाथशर्म्मणः, श्रीसदानन्दशर्म्मणः, श्रीचुम्मेशर्म्मणः श्रीदुःखमोचनशर्म्मणः, श्रीश्रीनाथशर्म्मणः, श्रीझूमकशर्म्मणः

श्रीरुद्रिनाथशर्म्मणश्चावलोक्य, दुरन्तकालकलनैः शङ्कर* पक्षधरादिमहामान्यविरहितापि मिथिला मा स्म भूत् मयाऽपिशून्येति बहुभो रूपैः स्वयं तर्कशास्त्रेणैवाऽस्ति भूष्यमाणेयमिति भूयो भूयो भावयन्ति भावुकाः। या च परमपण्डित—श्रीहलधरशर्म,—श्रीकृष्णनाथशर्म,—श्रीवनश्यामशर्म,—श्रीमधुसूदन—शर्मप्रभृतीनां मिथिलाधर्मसभाध्यक्ष—श्रीनिधिनाथशर्मणश्च चरणरोजऽभिमर्शनैरधुनाऽपि नाऽवसादमासादयति नागोजिभट्टोजिवरदराजादिसमानकालिकतावैधुर्यप्रयुक्तम्। यया च पण्डितवरश्रीचित्रधरशर्मश्रीबच्चाशर्मश्रीगणेशदत्तशर्मश्रीयोगदत्तशर्मश्रीप्यारेशर्मश्रीश्रीनाथशर्म्मश्रीभगवच्छर्मश्रीकेदारनाथशर्मप्रभृत्यनेकानेकमहामहोपाध्याययुतयाऽद्यापि साक्षादिव कार्यन्ते वाचस्पतिगङ्गेशोपाध्यायादयः प्रातःस्मरणीयपण्डिताः। यां च गृहीतावतारो विद्यापतिरिव, मैथिलभाषासन्दर्भरचनाबद्धकटिः कालिदास इव, स्वाशयं स्वयमेव कथयिष्यामीति ‡ रामायणतात्पर्यं चिकथयिषुः समायातो वाल्मीकिरिव अनेकभाषाकुशलः, सुमधुमधुरकवितासविता, समुद्योतितयशश्चन्द्रः, श्रीचन्द्रो नाम कविवरोऽलङ्करोति। किमिव वहुवचनीयं स्यात् अत्र वहुविस्तरभीतिसंरुद्धलेखिनीप्रसरेण मया, तद्विशेषवर्णनतृष्णा च अचिरादेवशमयिष्यतेऽपरस्मिन् मिथिलाचरितनामके ग्रन्थे यदि दैवं दक्षिणं भवेत्।

तस्या एवैतस्या मिथिलाया महाराजेन, तत्क्षणप्राप्तराज्यसिंहासनेन, राज्याभिषेकवारिविन्दुवृन्दवर्षणवारिदायितकचकुलेन, परमप्रमोदामोदपूरपरितप्रजाप्रजागरितजयध्वनिध्व-

---

* एतद्विषये प्रसिद्धोऽयं श्लोको मिथिलाप्रान्ते "शङ्करवाचस्पतयोः शङ्करवाचस्पती सदृशौ। पक्षधरप्रतिपक्षो लक्षीभूतो न च क्वापि"।

‡ अनेन कविना मैथिलभाषायां रामायणं रचितमस्ति ॥

नितसकलाकाशावकाशेन, कलिकालकलनाकलितक्लेदसंस्कृतभाषालताप्रोज्जीवनाङ्कुराङ्कितहृदयेन, नवविरचितसंस्कृतकाव्यावलोकनजागरूकोत्कण्ठेन महाराजाधिराजश्रीलक्ष्मीश्वरसिंहवीरवरेण समुत्तेजितोत्साहः प्रावर्त्तिषि रचयितुं नाटकमेदतद्दम्, विरचितं विरचितं, प्रेषितं प्रेषितं चाङ्कमङ्कं दर्शं दर्शं प्रासीददतितरां पण्डिताखण्डलमण्डलीमण्डितः श्रीमान् महाराजः। तत्प्रसादासादनतुन्दिलीभूतामन्दोत्साहप्रवाहस्याहमपि सपद्येव समाप्य ग्रन्थमिमं कृतार्थतासुखमन्वभूवम् ॥

एवं सप्तत्रिंशदुत्तरैकोनविंशशततमवैक्रमाब्दस्य १९३७ प्रारम्भ एव समाप्तोऽप्येष ग्रन्थोऽद्यावधि दैवात् प्रकाशं नालभत। अधुना तु महाराजस्य विशेषाज्ञया मुद्रायन्त्रद्वारा मुद्रितः साहित्यानन्दजुषां संस्कृतविदुषां चरणयोर्विलुठनसुखमनुभवितुं प्रस्तुतोऽस्त्येषसन्दर्भः।

अहो धन्यमेतद् भारतं वर्षं यत् सर्वासामपि विद्यानामाद्याचार्यतां दधत् रूपकनिरूपकतायामपि आदिगुरुतावैधुर्यकलङ्कपङ्कातङ्कशङ्कां न कलयति। अपरदेशेषु पूर्वं पूर्वमज्ञा इत इतश्च विज्ञाः समवर्तिषत परन्तु विचित्रेय कालप्रवाहपर्य्यालोचना भारतवर्षस्य यद् यथा यथा सूक्ष्मधिय इतिहासतत्त्वज्ञा दर्शं दर्शं प्राचीनपुस्तकानि, स्मारं स्मारं च तदुपन्यस्तविचारसंचारान् विचारयन्ति; तथा तथा अधिकमधिकं पूर्वपूर्वेष्वेव सकलातिशयकाष्ठां लभमानाः प्राचीनप्राचीनतरप्राचीनतमेष्वेव विज्ञविज्ञतरविज्ञतमपदानि प्रयुञ्जानाः सकलसृष्टिप्रवाहमूलभूते परमात्मनि स्वयंप्रकाशे निरतिशयां सर्वज्ञतामङ्गीकुर्वाणाः समापयन्ति ज्ञानातिशयपरिमार्गणव्यापारम् ॥ तद्वद् रूपकाचार्यतायामपि स एव देशः प्राचीनो यत्रत्याश्चिरात् गीतनृत्यवादितकुशलाः। भारते तु

वर्षे ऽनादिसिद्धं भगवज्ज्ञानस्वरूपं वेदमपि सामगानमयमव-
लोक्य को नाम संशयमाकलयेत्सङ्गीतविद्याया इहाप्यर्वाचीनता-
विषये। अन्यदेशीयाः कदाचित् सङ्गीतमपि क्षणिकमनोरञ्जनता-
मात्रफलकमिति विभावयेयुरत्रत्यास्तु एकाग्रता कारकं चित्ताप-
हारकमिति महद् वस्तु लब्धमौषधमिव मनस्यास्वास्थ्यरोगनिवर्त्तक-
मिति सह युङ्क्तामेतद्ऽभगवदुपासनपरिपाटीप्रकारैरिति वेदमा-
रभ्य ग्राम्यपद्यपर्य्यन्तं सर्वं सारस्वतं कविताजालं सस्वरतालं स-
मालपन्तः सङ्गीतमपि स्वर्गमोक्षफलकमिति सादरं गायन्ति ।

तथा च प्रसिद्धमेतद्

"वीणावादनतत्त्वज्ञः स्वरजातिविशारदः ।
तालज्ञश्चाप्रयासेन मोक्षमार्गं प्रगच्छति ॥
काव्यालापाश्च ये केचिद् गीतकान्यखिलानि च ।
शब्दरूपधरस्यैते विष्णोरंशा महात्मनः ॥
तथा नयति कैलाशं न गङ्गा न सरस्वती ।
यथा नयति कैलाशं नगं गानसरस्वती ॥
नाहं वसामि वैकुण्ठे योगिनां हृदये न च ।
मद्भक्ता यत्र गायन्ति तत्र तिष्ठामि नारद" ॥

भारते वर्षे किमन्यै राजकुलैरपि स्वयमेव नाटकान्यभिनीतानि
इति सुस्पष्टमाभाति महाभारतीयहरिवंशान्तर्गतविष्णुपर्वणि
त्रिनवतितमेऽध्याये यत्र प्रद्युम्नसाम्बादिभिर्वज्रनाभपुरे "कौवेरर-
म्भाभिसारं" नाम नाटकमभ्यनायि इति सविस्तरं न्यरूपि भगवता
व्यासेन ॥ तत्र हि पुरुषाणां पुरुषरूपाकलनेन स्त्रियां च स्त्रीरूपा-
कलनेन स्त्रीरूपं स्त्रिय एव कलयेयुरितप्रासीत्येवं परिपाटीति स्पष्टं
प्रतीयते, प्रतीयन्ते च यथास्थिता यथोचिताश्च सर्वेऽपि नान्दीप्रस्ता-
वनादिनियमाः । यस्मिन्समये राजवर्गीयैः स्वयं सोत्साहं नाटका-
न्यभ्यनायिषत तदा कति कवयः कति वा नाटकपुस्तकान्यासन्निति

को नाम शक्तो विभावयितुं परमदुरन्त कालस्य कलाप्रभावादद्य व्यासकीर्तितस्य§ अनुमितिमात्रगोचरतत्समयसत्ताकस्यापि नामापि नोल्लिख्यते केनापिकेचनापि का नाम कथा तत्र तत्पुस्तकावाप्तेः वर्त्तमानसमयेतु साहित्यदर्पणकाव्यप्रकाशाद्युद्धृतिद्वारा साक्षादवलोकनद्वारा वा येषां येषां रूपकग्रन्थानां सत्ता प्रतीयते तेषां नामावली परतो मया प्रकटीकरिष्यते ।

स्कन्दपुराणीयब्रह्मोत्तरखण्डे सोमव्रतप्रकरणे "सीमन्तिन्या पार्वतीप्रिया पूजितः पुरुषोऽपि सामवांस्तद्भक्तिमहिम्ना स्त्रीत्वं लेभे" इति सङ्क्षिप्तास्याख्यायिका सैव समूलेति, पवित्रेति, मनोहरेति, अद्भुतेति, शिक्षाभिक्षादायिनीति, भक्तिपर्यवसायिनीति, च मया तामेवाश्रित्य बहूनि सहायकानि, रसोज्जृम्भकाणि, कौतुकोत्पादकानि, कार्यनिर्वहणक्षमाणि, बिन्दुप्रकरीपताकाख्यानकादिसङ्घटकानि, पात्राणि प्रकल्प्य, विषयमसुमङ्कषट्के * विभज्य नाटकमिदं घटितम् । यद्यप्यत्राङ्गी शृङ्गारो रसः†तथापि नैष परकीयां सामान्यनायिकां वा समालम्ब्य प्रवृत्तो, न वा गान्धर्वादिविवाहाश्रयो न नायक धैर्यौदार्यादिमर्यादाविघट्टकमदनमदवशंवदताविलो नचक्वा तादृशत्वेऽपि विच्छिन्नविच्छित्तिरस्ति। अस्य वैचित्रीविशेषशालित्वेऽपि आनन्दस्रोतःस्राविता तु न केवलतर्कसम्पर्ककर्कशानि नवा केवलव्याकृतिसंस्कृतिप्रकृतिनिकृतिविकृतानि हृदयानि किन्तु अङ्गीकृतसङ्गीतभङ्गीनि साहित्यसुधासमुद्रस्नातानि सहृदयानामेव हृदयानि प्रमाणम्। सम्प्रति हि

---

*यथाह विश्वनाथः "पञ्चाधिका दशपरास्तत्राङ्काः परिकीर्त्तिताः" ।

† "एक एव भवेदङ्गी शृङ्गारो वीर एव वा" इति विश्वनाथः ।

§ अस्ति वाल्मीकिरामायणे ऽपि बालकाण्डे, अयोध्याकाण्डे च बहुशो नाटकचर्चा ["वधूनाटकसङ्घैश्च" नाटकान्य परे स्माहुः ....."]

स्वभावत एव विषयलोलुपचेतसो भवन्ति नवयुवकास्ते च यथा काव्येषु परकीयाविषयकप्रेमपरं परिकलय्य न भवेयुरतिकलुषमनसो न वा विघट्टयेयुर्धैर्यधुर्यमर्यादां तथा विमिष्यास्मिन् सच्चरितानुष्ठानमेवाशंस्यते इति स्वयमेवविभावयिष्यन्ति भावुकाः। अद्भुतोऽत्र * प्रधानोऽङ्गिनः सहकारी, अन्यैरपि च † रसैः पारम्पर्य्येण व्याप्तोऽस्त्येतस्य सर्वोपि भागः इति न तिरोधास्यति किमपि समालोचकानां पुरतः।

अस्मिन्नाटके प्रायिकः पटीक्षेप इति नूतनेयं पटीक्षेपपरिपाटीति मा स्म भूद् व्यामोहः कस्यापि पुरोभागिनः। प्राचीनैः खलु आचार्यैः प्राधान्येन पात्राणां वचनरचना एव ग्रन्थेषु समलेखिषत तद्भावभङ्गीप्रकारास्तत्सहचरानुष्ठितपटीक्षेपजवनिकापातरङ्गरचनादिव्यापाराश्च सङ्केतमात्रेण क्वचित् क्वचित् समसूचिषतेति न तत्सङ्क्षिप्तकथनमात्रेण भवति सोढव्यस्तत्सत्तापलापप्रलापोपि।

रङ्गभूमिरग्रतो वर्त्तमानाङ्कस्यादावपसारिताऽन्ते च पातिताभिनयभागद्योतिका जवनिकेत्युच्यते, अभिनीयमानविषयानुकारि। गिरिवननगरसागरादिचित्रमयी रङ्गभूमावेव * पात्यमानापसा-

---

* यथाह विश्वनाथः " कार्यं निर्वहणेऽद्भुतम् "।

† " नानारसनिरन्तरम् " इति विश्वनाथः।

* अस्याः पातोऽपसारणमपि च क्षेपणमुच्यते। अयं च क्षेपश्चतुर्विधः, दक्षिणतो वामत, उभयत, उपरिष्टाच्च। एवं दक्षिणतः प्रक्षिप्यतेऽपकृष्यते च सोऽयं दक्षिणतः, तथैव च वामतः। पट्या द्वे खण्डे उभयतः सहैव क्षिप्यमाणे मध्ये मिलतः सहैवापकृष्यमाणे च तिरोभवत इत्येष उभयतः क्षेपः। पटो हि उपरिष्टात् पात्यते

र्यमाणा च ७ अस्त्रेपमात्रप्रवेशितसुप्तोपविष्टादिपात्रा अत्यन्त हारितया पातितापसारिता च क्वापि चित्रपटी पटीत्युच्यते ।

पटीक्षेपश्चेन्न व्यावाहरिष्यत् तत् कथं प्राविक्ष्यत शयनगतैरासनस्थैः शिलापट्टमधिशयानैश्च पात्रैः कथं वा प्रावेक्ष्यत नाटककारैः कविवर्यैरनवरतं पटीक्षेपेण प्रविश्येत्येव माह ।

तथा च मुद्राराक्षसे तृतीयेऽङ्के " ततः प्रविशति स्वभवनगत आसनस्थश्चाणक्यः " ।

चतुर्थेऽङ्के "ततः प्रविशति शयनगतो राक्षसः"

पञ्चमेऽङ्के " ततः प्रविशति आसनस्थो राक्षसः "

सप्तमेऽङ्के " प्रविशति अपटीक्षेपेण राक्षसः । " " जवनिकावृतशरीरो सुखमासनस्थश्चाणक्यः " " जवनिकामपनीयोपसृत्य "

वेणीसंहारे ।

द्वितीयेऽङ्के " ततः प्रविशत्यासनस्था देवी भानुमती सखी चेटी च " तत्रैव " प्रविश्य पटीक्षेपेण सम्भ्रान्तः कञ्चुकी " ।

शाकुन्तले ।

तृतीयेऽङ्के " एषा मे मनोरथ प्रियतमा सकुसुमास्तरणं शिलापट्टमधिशयाना सखीभ्यामुपास्यते । भवतु लताव्यवहितः शृणोमि विश्रब्धकथितान्यासाम् [ इति विलोकयन् स्थितः ]

उपरिष्टादेव समाक्रक्ष्यते,च सोयमुपरिष्टात् क्षेपः । प्रायः प्रचलितोऽत्यन्तहारी चायं चरमः ॥

७ पश्चात् पृष्ठतः कृतनेपथ्यानि सुप्तोपविष्टादिपात्राणि सज्जीभूय तिष्ठन्ति ततश्च पटी क्षिप्यते तानि च रङ्गावस्थितानि सामाजिकैरवलोक्यन्त इति व्यवधानविघट्टनपूर्वकस्तत्सामाजिकचक्षुर्विषयीभावरूपो विलक्षणस्तेषां प्रवेशः ।

[ ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला " ] ।

चतुर्थेऽङ्के " अनुसूया पटीक्षेपेण प्रविश्य "

रत्नावल्याम् ।

प्रथमेऽङ्के ततः प्रविशति आसनस्थो गृहीतवसन्तोत्सववेशो राजा विदूषकश्च " ( अस्ति च होलिकावर्णनमपि वसन्तोत्सव-नाम्ना तत्रैव ) ।

द्वितीयेऽङ्के ( रङ्गभूमिरचना ) " एदं क्खु कदलीघरं ता जाव पविशामि " ,, कदली गृहाभिमुखं परिक्रामति " " सर्वे कद-लीगृहान्निष्क्रान्ताः " ।

चतुर्थेऽङ्के " ततः प्रविशत्यासनस्थो राजा " " ततः प्रविशति निगड़संयता सागरिका " इत्यादि ।

यद्यपि केषुचिद्विषयेषु नाटकलक्षणानाङ्क्रान्तोऽप्यस्त्येष ग्र-न्थस्तथापि विच्छित्तिविशेषशालित्वात् रसचमत्कारानुपमर्दक-त्वाच्च बुद्धिपूर्विकैव विहिता साऽसमुपेक्षेति समीचकाः सुसूक्ष्मधि-यावधारयन्तु ।

इतस्तु योगसूत्रकारिका स्वरूपे मद्रचितपातञ्जलप्रतिबिम्ब-ग्रन्थे लक्षैरेवकियदधिकैः श्लोकैरात्मानं परिचाययन् समापयामि उपोद्घातमेतम् । तथाहि ।

सविजयजयपुरनगरात् प्रहरद्वयगम्य एकोऽस्ति ।
धूलिलयाख्यो ग्रामः पर्वतपरिधिश्च सर्वतो रुचिरः ॥ १ ॥
यः सादिकशान्दोलनसङ्केतितवाजिराजिसंचारैः ।
खुरसम्पातविघट्टितधूलिभिरुपलक्ष्यते दूरात् ॥ २ ॥
रस इव मूर्त्तो वीरो धीरो धीरोचिताखिलप्रकृतिः ।
नित्यं कृपाणपाणिः परिपन्थिगणे कृपाकृपणः ॥ ३ ॥
यस्मिन् दलेलसिंहोऽपरः किरीटीव संजातः ।

अद्यापि यस्तदीयैः कुलजैर्वीरैः सनाथितोऽद्यास्ति ॥ ४ ॥
तस्मिन्नपूर्वशोभे शासनधूर्वहनरेन्द्रकृतलोभे ।
मामकपूर्वजचरणा अवसन् कृतबहुसदाचरणाः ॥ ५ ॥
जयसिंहमानसिंहप्रतापसिंहादिभिर्नृपैः ।
शासितचरे जयपुरे जनिर्मदीया बभूव विजययुते ॥ ६ ॥
पञ्चदशोत्तर एकोनविंशशतके १९१५ तु वैक्रमाब्दस्य ।
चैत्रे सिते नवम्यां प्रभातसमयेऽस्मि जातोऽहम् ॥ ७ ॥
प्राकृतसंस्कृतकाव्येऽपर इव गीर्वाणगुरुरासीत् ।
दुर्गादत्ताह्वानो मानधनस्तातचरणो मे ॥ ८ ॥
काश्यां सुकविसभायां पूर्वं कवितासुधावगाहिन्याम् ।
पूरितसुभगसमस्यः शस्यनमस्यः सदैव यः समभूत् ॥ ९ ॥
निवसन् स काशिकायां छात्राणां पाठनावसरे ।
मामतिलीलालोलं कृपया क्रोडे सदाकार्षीत् ॥ १० ॥
क्रीडनकान्यपि विद्यासम्बन्धीन्येव सोऽरचयत् ।
संस्कृतपदसङ्केतान् भोज्यादौ ग्राहयन् नितराम् ॥ ११ ॥
पौराणिकेतिहासैः काव्यकथाभिश्च नाटकाख्यानैः ।
मामतिवार्ताव्यसनं व्यजनासयच्चिरमतीवकारुणिकः ॥ १२ ॥
अथ मां तोषं तोषं कृतसन्तोषं त्वमरकोषम् ।
समपाठयत् पटिष्ठः, छन्दःसन्दर्भरीतीश्च ॥ १३ ॥
कविरेवं सविता मम कलाधरः पुरुगुणो गुरुर्गण्यः ।
मङ्गलसङ्गललामः शनकैः समशुश्रुधद् बुधो बोधम् ॥ १४ ॥
सुमतिविभाव्ये काव्ये दृश्ये श्रव्ये तथा भव्ये ।
प्रावर्तयतवरीयान्संस्कृतवाण्यासमालपन्ललितम् ॥ १५ ॥
प्रतिभाबीजव्यक्तिं श्रुत्यभ्यासाव्युत्पत्त्युज्ज्वलासिक्ताम् ।
कवितालताप्ररोहाभिमुखीमकरोच्चतुर्भिरुत मासैः ॥ १६ ॥

भागवतो भागवतं विगलितखेदं यजुर्वेदम् ।
गणकैर्भणितं गणितं ललितं फलितं तथा किंचित् ॥ १७ ॥
षड् दर्शनानि सम्यक् प्रकाश्य सकलानि मद्हृदये ।
प्राप्तोऽदर्शनभावं सोऽपि स्मरणीय एव संजातः ॥ १८ ॥
काशीजुषां सुविदुषां पूजितवपुषां स्वधर्मपुषाम् ।
अस्माऽहमधुना सुचिरं रुचिररुचीनामनुग्राह्यः ॥ १९ ॥
दास्यमिव हरेर्मूर्त्तं देवीदत्तः पितृव्यचरणो मे ।
वात्सल्यपूरपूर्णः काश्यां निवसन् सदैव मयि दयते ॥ २० ॥
श्रीमान् गणेशदत्तः सोदर्यो मेऽग्रजोऽद्यापि ।
निवसन् जयपुर एव श्रीकृष्णं सेवते सिद्धः ॥ २१ ॥
स्मृत्वा तदीयचरणौ प्रविहितबहुतीर्थसार्थमञ्चरणौ ।
खेदच्छेदविपाटकनाटकमेतन्मया व्यरचि ॥ २२ ॥
(१९३७) मुनिवन्हयङ्कसुधाकरसम्मित संवत्सरारम्भे ।
सुखमयमूर्त्तिः पूर्त्तिर्ग्रन्थस्यैतस्य संजाता ॥ २३ ॥
एतन्निवेद्य वेद्यं विद्योतितगद्यपद्यविन्यासम् ।
लक्ष्मीश्वरप्रसादादृते नु कस्य प्रसादमाशासे ॥ २४ ॥
साहित्यमार्मिकाश्चेत् किमपि समालोच्य वक्ष्यन्ति ।
नूनं सहर्षवर्षं समावधेयं भविष्यति तत् ॥ २५ ॥
हठिनामतिमुखराणां दोषैकदृशां तु मत्सरिणाम् ।
उच्छृङ्खलप्रलापं कर्णे कः कीर्त्तिमान् कलयेत् ॥ २६ ॥
क्षणमपि चेत् पङ्क्तिमपि प्रीत्या कश्चित् पठिष्यति प्रज्ञः ।
कृतकृततां तदासौ कलयिष्यत्यम्बिकादत्तः ॥ २७ ॥

विद्वज्जनकिङ्करः

ग्रन्थकारः

## रूपकनामावली ।

| ग्रन्थ नाम । | कविनाम । |
|---|---|
| अङ्गदनाटकम् । | ... ... |
| अतन्द्रचन्द्रिका । ... | विद्यानिधिः । |
| अनर्घराघवम् । ... | मुरारिः । |
| अनेकमूर्त्तम् । | ... ... |
| अभिराममणिनाटकम् । | सुन्दरमिश्र । |
| अम्बालभाणः । ... | श्रीवरदाचार्यः । |
| अरुणामोदिनी । ... | ... ... |
| अहल्यासङ्क्रन्दनम् । ... | ... ... |
| आनन्दविलासः । ... | ... ... |
| आसामविजयः । ... | हरिजीवनः । |
| इन्दिरापरिणयः । ... | ... ... |
| उत्तररामचरितम् । ... | भवभूतिः । |
| उदयनचरितम् । | ... ... |
| उदात्तराघवम् । | ... ... |
| ऊषारागोदया । | रुद्रचन्द्रदेवः । |
| कनकवल्लीपरिणयः । | ... ... |
| कनकावतीमाधवम् । | ... ... |
| कन्दर्पकेलिः । | ... ... |

| ग्रन्थनाम। | कविनाम। |
|---|---|
| कन्यामाधवम्। | ... ... |
| कमलिनीकलहंसम्। | चूड़ामणिदीक्षितः। |
| कन्यावतीकामरूपम्। | ... ... |
| कर्णसुन्दरी। | ... ... |
| कर्पूरमञ्जरी। ... | राजशेखरः। |
| कल्याणपरिणयः। | ... ... |
| कामदत्ता। | ... ... |
| काशिदासप्रहसनम्। | ... ... |
| कुन्दमाला। ... | ... ... |
| कुलपल्यङ्कम्, ... | ... ... |
| कुसुमवाणविलासः। | ... ... |
| कुसुमशेखरविजयः। | ... ... |
| कृत्यारावणम्। | ... ... |
| कृष्णकुतूहलम्। ... | मधुसूदनसरस्वती। |
| ... ... | (२००० श्लोकाः) |
| कृष्णभक्तिचन्द्रिका। | (अनन्तदेवः) |
| केलिरैवतकम्। ... | .. ... |
| कौतुकसर्वस्वम्। ... | गोपीनाथः। |
| कंसबधम्। ... | कृष्णकविः (१०५०श्लोकाः) |

| ग्रन्थनाम। | कविनाम। |
| --- | --- |
| क्रीड़ारसातलम्। | ... ... |
| चण्डकौशिकम्। | आर्यक्षेमीश्वर:। |
| चन्द्रकला। | विश्वनाथ:। |
| चन्द्रप्रभा। | ... ... |
| चित्रयज्ञम्। | वैद्यनाथ वाचस्पति: |
| चैतन्यचन्द्रोदयम्। | कर्णपूर:। |
| छलितरामम्। | ... ... |
| जगन्नाथवल्लभम्। | जगन्नाथ कविराज:। |
| जानकीपरिणय:। | रामभद्रदीक्षित:। |
| जानकीराघवम्। | ... ... |
| जामदग्न्यम्। | ... ... |
| तपासंवरणम्। | त्रावङ्कोरराज:। |
| तरङ्गदत्तम्। | ... ... |
| ताराशशाङ्कम्। | श्रीधर:। |
| त्रिपुरदाह:। | ... ... |
| त्रिपुरारि:। | ... ... |
| दानकेलिकौमुदी। | ... ... |
| दूताङ्गदम्। | ... ... |
| देवीमहादेवम्। | ... ... |

| ग्रन्थनाम। | कविनाम। |
|---|---|
| धनञ्जयविजयः। | काञ्चनः। |
| धर्मविजयः। | शुक्लभूदेवः। |
| धर्माधर्मकलकलम्। | अम्बिकागत्तो व्यासः। |
| धूर्तनर्तकम्। | ... ... |
| धूर्त्तसमागमम्। | राजशेषरः। |
| ध्रुवचरित्रम्। | दामोदरशास्त्री। |
| नग्नभूपतिग्रहम्। | ... ... |
| नटकमेलकम्। | ... ... |
| नरकासुरव्यायोगः। | ... ... |
| नर्मवती। | ... ... |
| नागानन्दः। | श्रीहर्षः। |
| नाटकसर्वस्वम्। | ... ... |
| पञ्चबाणविजयः। | ... ... |
| पारिजातकम्। | ... ... |
| पार्थपराक्रमम्। | ... ... |
| पार्वतीस्वयंवरम्। | ... ... |
| पुष्पदूषितकम्। | ... ... |
| पुष्पमाला। | चन्द्रशेखरः। |
| प्रचण्डपाण्डवम्। | राजशेखरः। |

| ग्रन्थनाम । | कविनाम । |
|---|---|
| प्रद्युम्नविजयः । | शङ्करदीक्षितः । |
| प्रद्युम्नानन्दीयम् । | वेङ्कटाचार्यः । |
| प्रबोधचन्द्रोदयम् । | कृष्णमिश्रः । |
| प्रभावतीपरिणयः । | ... ... |
| प्रसन्नराघवम् । | जयदेवः । |
| प्रियदर्शना । | ... ... |
| प्रियदर्शिका । | श्रीहर्षः । |
| बधशिला । | ... ... |
| बालभारतम् । | ... ... |
| बालरामायणम् । | राजशेखरः । |
| बालिबधः । | ... ... |
| विद्धशालभञ्जिका । | राजशेखरः । |
| भवानीपरिणयः । | ... ... |
| भिक्षाटनम् । | ... ... |
| भर्तृहरिनिर्वेदः । | ... ... |
| मधुरानिरुद्धम् । | चन्द्रशेखरः । |
| मल्लाङ्कनाटकम् । | ... ... |
| मयपालिका । | ... ... |
| मरकतवल्लीपरिणयः । | ... ... |

| ग्रन्थनाम । | कविनाम । |
|---|---|
| मल्लिकामारुतम् । | उद्दण्डः । |
| महारामायणम् । | हनूमान् । |
| महावीरचरितम् । | भवभूतिः । |
| मालतीमाधवम् । | भवभूतिः । |
| माधवाभ्युदयम् । ... | वेदोत्माचार्यः । |
| मालमङ्गलम् । ... | मालमङ्गलः । |
| मालविकाग्निमित्रम् । | कालिदासः । |
| मित्रालापः । ... | अम्बिकादत्तो व्यासः । |
| मुकुन्दानन्दम् । | काशीपतिः । |
| मुण्डितप्रहसनम् । | सुभटः । |
| मुद्राराक्षसम् । ... | विशाखदत्तः । |
| मृगाङ्कलेखा । | विश्वनाथः । |
| मृच्छकटिकम् । ... | शूद्रकः । |
| ययातिचरित्रम् । | रुद्रभट्टः । |
| ययातिविजयः । ... | ... ... |
| ययातिशर्म्मिष्ठा । ... | ... ... |
| यादवोदयम् । ... | ... ... |
| रतिवल्लभम् । ... | जगन्नाथपण्डितराजः । |
| रत्नावली । ... | श्रीहर्षः । |

| ग्रन्थनाम। | कविनाम। |
|---|---|
| रम्भामञ्जरी नाटिका। | न्यायचन्द्रः। (४३५ श्लो०) |
| रविकिरणकूर्चिका। | ... ... |
| राधामाधवम्। | रामचरितम्। |
| रामजन्म। | ताराचरणतर्करत्नः। |
| रामनाटकम्। | ... ... ... |
| रामाभिनन्दम्। | ... ... ... |
| रामाभ्युदयम्। | ... ... |
| रामोदयम्। | ... श्रीवत्सलाञ्छनः (७८० श्लो०) |
| रुक्मिणीकल्याणम्। | चूड़ामणिः। |
| रुक्मिणीपरिणयः। | रामचन्द्रः। |
| रैवतमदनिका। | ... ... |
| ललितानाटिका। | ... ... |
| लिङ्गदुर्भेदनाटकम्। | दादमभट्टः। (७८० श्लोकाः) |
| वकुलमालिनीपरिणयः। | कृष्णदीक्षितः। |
| वटुचरित्रम्। | ... ... |
| वसन्ततिलका। | वरदाचार्यः। |
| वसन्तभूषणम्। | ... ... ... |
| वसुमतीचित्रसेनम्। | ... ... ... |
| वासन्तिकापरिणयः | ... ... |

| ग्रन्थनाम । | कविनाम । |
| --- | --- |
| विक्रमोर्वशी । | कालिदासः । |
| विजयपरिजातम् । | हरिजीवन: । |
| विदग्धमाधवम् । | रूपगोस्वामी । |
| विद्यापरिणय: । | वेदकविस्वामी । |
| विन्दुमती । | ... ... |
| विलासवती । | ... ... |
| वृषभानुजा । | मथुरादासः । |
| वृहन्नाटकम् । | ... ... |
| वेणीसंहारम् । | नारायणभट्टः । |
| शाकुन्तलम् । | कालिदासः । |
| शारदातिलकम् । | शङ्करः । |
| शृङ्गारतिलकम् । | रुद्रभटः । |
| श्रीदामचरितम् । | साम्राज्यदीक्षितः । |
| सङ्कल्पसूर्योदयः । | वेदान्ताचार्यः । |
| सत्यभामापरिणय: । | कृष्णकवीन्द्रः । |
| सत्सङ्गविजयः । | वैद्यनाथः । |
| समुद्रमथनम् । | ... ... |
| संवरणनाटकम् । | ... ... |
| सानन्दगोविन्दम् । | गोपालभट्टः । (१२१६ श्लोकाः) |

| ग्रन्थनाम। | कविनाम। |
| --- | --- |
| सामवतम्। | अम्बिकादत्तो व्यासः। |
| सावित्रीचरितम्। | शङ्करलालः गुर्जरः। |
| सीताराघवम्। | ... ... |
| सुदर्शनविजयम्। | ... ... |
| सुभद्राधनञ्जयम्। | गुरामः। |
| सुभद्राविजयम्। | ... ... |
| सुभद्राहरणम्। | ... ... |
| सौगन्धिकाहरणम्। | ... ... |
| स्तम्भितरम्भम्। | ... ... |
| हनुमन्नाटकम्। | मिश्रमोहनदासः। |
| हास्यार्णवम्। | जयदेवः। |
| हरिश्चन्द्रयशश्चन्द्रिका | ... ... |

इति।

# नाटके पात्राणि ।

| पुरुषाः । | स्त्रियः । |
| --- | --- |
| १ सूत्रधारः । | १ नटी ( सूत्रधारपत्नी ) |
| २ बन्धुजीवः (सुमेधास्सखा) | २ मदालसा ( अप्सरसः ) |
| ३ सारस्वतः ( मुनिः ) | ३ इन्दुवदना ( तत्सखी ) |
| ४ वेदमित्रः ( मुनिः ) | ४ भावकलावती ( नर्त्तकी ) |
| ५ सामवान् ( सारस्वतपुत्रः ) | ५ सामवती ( सुमेधसःपत्नी ) |
| ६ सुमेधाः ( वेदमित्रपुत्रः ) | ६ मालतिका ( चेटी ) |
| ७ कलिः । | ७ भगवती ( देवी ) |
| ८ दुर्वासाः ( मुनिः ) | ८ मधुरवचना (सामवत्याः सखी) |
| ९ जटिलः ( बधिरो ब्राह्मणः ) | |
| १० श्रीकान्तः ( अमात्यः ) | |
| ११ देवशर्म्मा ( राजपुरोहितः ) | |
| १२ धर्मसिन्धुः ( राजा ) | |
| १३ भिक्षुकः ( कोपिभिक्षूभूतोविद्वान् ) | |
| १४ ब्रह्मचारी ( योगी ) | |
| राजभटादयश्च । | |

## प्रथमाङ्कपात्राणि ।

| | |
|---|---|
| सूत्रधारः । | नटी । |
| बन्धुजीवः । | मदालसा । |
| सारस्वतः । | इन्दुवदना । |
| वेदमित्रः । | |
| सामवान् । | |
| सुमेधाः । | |
| कलिः । | |
| दुर्वासाः । | |

श्री नवनीतप्रियाय नमः ।

# अथ सामवतं नाम नाटकं प्रारभ्यते ।

( नान्दी † )

* सलज्जैर्निर्वस्त्रं भयशिथिलितैर्नागविभवं ,
भवं दृष्ट्वा चन्द्राङ्कितकलजटं किञ्च चकितैः ।
कटाक्षैरुन्मीलन्मधुपजलजातद्युतिहरै ,
र्भवान्याः सन्तुष्टो वितरतु सुखं काममथनः ॥ १ ॥

---

† अत्र द्वादशपदा नान्दी । तल्लक्षणं यथा " आशीर्वचनसंयुक्ता नित्यं यस्मात् प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता । माङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिसी । पदैर्युक्ता द्वादशभिरष्टभिर्वापदैरुत ॥ " साहि० ६ परि० । पदलक्षणन्तु विद्धशालभञ्जिकाटीकायां नारायणदीक्षितेनोक्तं यथा,— " श्लोकपादं पदं केचित् सुप्तिङन्तमथापरे । परेऽवान्तर वाक्यैकस्वरूपं पदमाहुर्विशारदाः " इति । अत्र तु श्लोकपादः पदं ज्ञेयम् । सन्ति चात्र मङ्गल्यचन्द्रकमलादीनां शंसनानि ॥

* सलज्जैरिति ॥ भवान्याः पार्वत्याः उन्मीलन्मधुपजलजातद्युतिहरैः भ्रमराश्रितकमलकान्तिविजित्वरैः कटाक्षैः अपाङ्गदर्शनैः ( अपाङ्गौनेत्रयोरन्तौ कटाक्षोपाङ्गदर्शने इत्यमरः ) सन्तुष्टः प्रसन्नः काममथनः शिवः सुखमानन्दं वितरतु ददातु । अधुनाऽत्र मत्रः शिवं कटाक्षांश्च विशिनष्टि । निर्वस्त्रं दिगम्बरं नागविभवं सर्पभूषणं चन्द्राङ्कितकलजटं चन्द्रकलाशोभितमञ्जुलजटं च भवं शिवं दृष्ट्वा विलोक्य सलज्जैः व्रीडापरवशैः भयशिथिलितैः

तथा च,

ः कलितामलकमलच्छविरविकरनिकरारुणे गणेशपदे।
विलुलितकचकुलमालाः सफलितभालाः कदाभविष्यामः॥ २॥

किञ्च,

* द्यूतक्रीड़ां करिष्ये नहि नहि भवता साकमम्भोजनेत्र,
गृह्णासि त्वं मदीयाः किल निजविजये हारकेयूरकाञ्चीः।

भीतिकुञ्चितैः चकितैः आश्चर्य्यादञ्चितैः इति॥ तत्तद्विशेषणविशिष्ट शिवावलोकनस्य कटाक्षविशेषणहेतुत्वात् क्रमेणान्वयः। पूर्वार्द्धपदै अस्मिन् नाटके क्वचित् २ लज्जानुभवभयाश्चर्य्यादिविषयाः सन्तीति ध्वन्यते उत्तरार्द्धे काममथनपदेन च अस्मिन् नाटके अन्यनाटकवत् कामपरवशो नायको नास्ति किन्तु स्वयमेव धैर्य्यधारिधौरेयो जितकामश्च इति ध्वन्यते। अत्रशिखरिणी वृत्तिः। अस्मिंश्च श्लोके "सर्वगुर्मोमुखान्तर्लौ यरावन्तगलौ सतौ। ग्मध्याद्यौ ज्भौ त्रिलौ नोऽष्टौ भवन्त्यत्र गणास्त्रिकाः" इति वृत्तरत्नाकरोक्तरीत्या आदौ यगणः ततश्च मगणः तत्र च यगणस्य वृद्धिकारित्वं मगणस्य श्रीकारित्वमिति अभिनेतृणां द्रष्टृणां ग्रन्थकर्तुः ग्रन्थरचनाज्ञापकस्य च वृद्धिकरः श्रीकरश्चायं ग्रन्थः इति सोसूच्यते॥

ः कलितेति। गणेशस्मरणस्य सर्वकार्य्येषु अत्यन्तमाङ्गलिकत्वा ८ तं स्मरति बहुपात्राभिप्रायार्थं बहुवचनं गणानामीशः इति व्युत्पत्त्या च हरिहरादिरूपा सर्वापि स्वेष्टदेवता स्तुतिगोचरी भवति। शेषं स्पष्टम्। इयं गीतिर्वृत्तिः।

* द्यूत क्रीडामिति। हे! अम्भोजनेत्र! कमलनेत्र ईश शिव त्वं निजविजये सति मदीयाः हारकेयूरकाञ्चीः गृह्णासि मज्जये च त्वं शूलं व्यालं कपालं डमरुञ्च मे ददासि इत्थममुनाप्रकारेण देव्या वचोभिः प्रहसितवदनःचन्द्रचूड़ः शिवःनःपातु। इयंस्रग्धरावृत्तिः।

शूलं व्यालं कपालं डमरुमथ ददासीश मे मज्जयेत्व,
मित्थं देव्या वचोभिः प्रहसितवदनः पातु नश्चन्द्रचूडः ॥ ३ ॥

( नान्द्यन्ते सूत्रधारः * )

( परिषदमवलोक्य ) अहमेतान् जनान्, अन्तः स्थितामन्दानन्दविकसितवदनारविन्दान्, उत्कण्ठोत्कण्ठान्, अव्यग्रमेकाग्रीकृतचित्तान्, धारितौत्सुकतया विस्फारितनेत्रान्, अद्यसामवतनाटकलीलाविलोकनमीहमानानिव मन्ये ( विचार्य पुनः ) युक्तं हि, कस्य हृदयं न हरति सामवतं नाम नाटकम् । यस्मिन् सामवत्सुमेधसोर्मिलितता, सामवतो धीरस्यापि मदालसासाचात्कारेण कामवशंवदता, अल्पापराधेऽपि दुर्वाससः कठिनशापता, तपस्तापितस्यापि कलेः पापता, निरर्गलहोलिकोत्सवस्य दुरन्तता, राजप्रमादस्यानन्तता, कपटस्य दुःखदता, भक्तिभावस्या-

---

अत्र प्रथमं शिखरिण्या सामवतः स्त्रीभावान्तः शिखरप्रचय इव उच्चावचो वृत्तान्तः परतो गीतिवृत्या ब्रह्मचारिणः भिक्षुकस्य च गीतिमयो वृत्तान्तः ततः स्रग्धरावृत्या च सामवतीसुमेधसो वैवाहिको वृत्तान्तो ध्वन्यते । तत्रापि प्रथमश्लोके लज्जाऽऽश्चर्यधैर्य्यभयाशंसनेन राजगेहे सारस्वतागमनपर्य्यन्तो वृत्तान्तः द्वितीयेन च भगवतीसमाराधनरूपो वृत्तान्तः तृतीयेन च सामवतीसुमेधसोः समागमरूपो वृत्तान्तो ध्वन्यते विशिष्य च शृङ्गारहास्याश्चर्याख्याने काममंथनशंसनेन च एतन्मयोयं ग्रन्थ इति स्पष्टं प्रकटीक्रियते ।

* सूत्रं प्रयोगानुष्ठानं धरतीति सूत्रधारः । स्थापकनामा नटविशेषः तथाच सङ्गीतसर्वस्वे " वर्त्तनीयतया सूत्रं प्रथमं येनसूच्यते । रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यते "॥

ऽपूर्वसामर्थ्यता, काममार्गणानां दुर्वारता, धीरधौरेयस्य सुमेधसो धन्यता, विप्रकोपस्य भयङ्करफलता, दैवघटनायाश्च, अवश्यंभाविता सहृदयहृदयहारिरसोल्लासभङ्गीभिर्बहुधा प्रदर्शिता ।

मन्ये यद्यपि एतत्काव्यपठनैः श्रवणैश्च एतैर्बहुशो विनोदित आत्मा तथापि एतदऽभिनये एषां महानाग्रहः ।

युक्तं हि,

दृश्यानामानन्दं पठनैः श्रवणैर्हि लिप्सते यो वै ।
नूनं समीहतेऽसौ चम्पकमालां दृशाऽऽघ्रातुम् ॥ ४ ॥

किंच,

§ नाटकपठनानन्दो लक्षगुणो भवति नाटकाभिनयैः ।
करसंस्पृष्टा तन्त्रीः क्वणिता पीयूषवर्षमातनुते ॥ ५ ॥

अस्तु अहमपि सदैव समीहे नाटकान्यभिनेतुम् उत सम्प्रति तु मम परिषद्गतो रसिकजनः ।

तथा हि,

गुणिनो दुर्लभा भूमौ गणनीयाः सुसंसदि ।
तदीयश्रमबोद्धारो रसिकाश्चातिदुर्लभाः ॥ ६ ॥

उक्तञ्च परैः,

*श्लोकः श्लोक्यः स एवास्ति यो बुधाग्रे प्रकाशितः ।
लकारो लुप्यते तस्मिन् योऽबुधाऽग्रे प्रकाशितः ॥ ७ ॥

---

§ नाटकेति । तन्त्रीरित्यत्र अङ्यन्तत्वान्न सुलोपः तथाचोक्तम् " अवी-लक्ष्मी-तरी-तन्त्री-ह्री-धी-श्रीणामुणादितः । स्त्रीलिङ्गानाममीषान्तु न सुलोपः कदाचन " इति ।

* श्लोक इति । श्लोकशब्देलकारोलुप्यते अर्थात् शोकशब्देनावशिष्यते इति यावत् ।

(नेपथ्याभिमुखमवलोक्य) इत इतः प्रिये।

(ततः प्रविशति नटी) (नटीं समाजं चावलोक्य सूत्रधारः स्वगतम्)

अहो,

सामाजिकानां नयनप्रचाराः, सोत्कण्ठतापूरविकम्पितारः।

पद्मं यथा चञ्चलभृङ्गसार्थः, नटीमुखं तत् सहसा ललम्बे ॥८॥

न०।—१अज्ज अहं भवन्तं जेव्व मग्गमाणा एत्थ आअदम्हि किंवि आणवेदु अज्जो §।

सू०।—किमधिकं पश्य,

उत्कण्ठितेयं रसिकस्य सर्वा,

मदीय उत्साहगणस्य कान्ते।

लीलासु चातुर्यमयी सखीनां,

स्थितं तव भ्रूलतिकाभिहाऽद्य ॥ ९ ॥

न०।— (* बिब्बोकाहारम्) २ अज्जस्स दु णिच्चं णच्चे जेव्व

१ आर्य अहं भवन्तमेव मार्गमाणा अत्रागतास्मि किमप्याज्ञापयत्वार्यः।

२ आर्यस्य तु नित्यं नृत्ये एवाभिलाषो भवति……अथकिं नाटितव्यं किं प्रहसनम्?

* बिब्बोकस्तु ति गर्वेण वस्तुनीष्टेऽप्यनादरः इति दर्पणे।

§ अस्मिन्नाटके प्रायशः प्राकृतभाषिणः शौरसेनीं भाषन्ते नाटकस्य विदर्भप्रान्तविषयत्वात् विदर्भस्य कृष्णद्वारकशौरसेनसम्बन्धात् शौरसेन्याः अन्यभेदापेक्षयाऽतिमधुरत्वाच्च। यद्यप्यस्मिन्प्रायो हेमचन्द्रलक्षणलक्षिता शौरसेनी तथापि मतभेदात् क्वचिद-

अहिलासो होदि। (चणानन्तरम्) अथ किं णाड़िदव्वम्, किं प्पहसणम्?

सू०।—नहि, अलमसभ्यवाचां विस्तरैः।

न०।—१ अवि साउन्तलं रोअदि?

सू०।—कः कविकुलगुरोः कालिदासस्य क्वतिं न मानयेत्! किन्तु, अये कुञ्चितकुन्तले। शाकुन्तले शकुन्तला साञ्जननयनवारिधारापरिक्षालितकुचकेसरापि, मूर्छितपतगकलापं विलापं कलयन्त्यपि, त्वदीयाहं त्वदीयाहमिति क्रियासमभिहारेणानल्पं जल्पन्त्यपि; येन पूर्वं सबहुमानमूढ़ा तेनैव क्वपाणवत् क्वपाक्वपणेन दुष्यन्तेन कर्कशं भर्त्सिताऽवज्ञाता चेति ममैव चिरं खिद्यते चेतः।

१ अपिशाकुन्तलं रोचते?

न्यक्षीक्वतशब्दा अपि प्रयुक्ताः। एतद्विषये हेमचन्द्रसूत्राणि यथा अ० ८ पा० ४ "तोदोऽनादौशौरसेन्यामयुक्तस्य ५९ अधःक्वचित् ६० वादेस्तावति शौरसेन्याम् ६१ आआमंत्र्येसौवेनोनः ६२ मोवा ६३ भवद्भगवतोः ६४ नवार्योय्यः ६५ थोधः शौरसेन्याम् ६६ इहहचोर्हस्य ६७ भुवोभः ६८ पूर्वस्यपुरवः ६९ क्वइअदूणी ७० क्वगमोडडुअः ७१ दरिचेचोः ७२ अतोदेश्च ७३ भविष्यतिस्सिः ७४ अतोङसेर्डादोडादू ७५ इदानीमोदाणिम् ७६ तस्मात्ताः ७७ मोंत्या णोवेदेतोः ७८ एवार्थेय्येव ७९ हंजेचेट्याह्वाने ८० हीमाणहे विस्मयनिर्वेदे ८१ णंनन्वर्थे ८२ अम्महेहर्षे ८३ हीहीविदूषकस्य ८४ शेषं प्राक्वतवत्॥ ८५॥

न० ।—१ तहिं रसावली ?

सू० ।—कथन्न इयन्तु श्रीहर्षविरचिता हर्षवर्षविधायिनी। किन्तु इयमस्माभिः कतिकृत्वो न नाटिता एतैश्च कतिधा नावलोकिता ।

न० ।—( किञ्चित् सभ्रु कुटि ) २ अध कहेदु अज्जो जेव्व ।

सू० ।—अहं सामवतमभिनिनीषामि । * यदिदानीं रूपकगण ना सत्तानां कनिष्ठिकामेवाधिरोहति, यच्च सहृदयशिरो-मणेर्मिथिलादेशाधीशस्य महाराजश्रीलक्ष्मीश्वरसिंहस्यादेशेन तद्राज्याभिषेकोत्सवसमये काशीवासि-विदुषाम्बिकादत्तकवि-ना निरमायि यच्च अस्माभिरपि न कदापि नाटितम् यद्दिदृच-वश्च सन्त्यैते रसिकसामाजिकाः ।

न० ।—३ मिधिलाभत्तुणो ?

सू० ।—आं मिथिलाभर्त्तुरादेशात् ।

न० ।—( क्षणं विचार्य ) ४ जइ वि विलम्बो होदि तह वि पढ़मं मिधिलां वण्णेदु अज्जो ।

सू० ।—प्रिये मिथिलां वर्णयितुं तु महाकवयोपि शिथिला भवन्ति मया कथमिव वर्णिता स्यात् तथापि किञ्चित् कथयामि, सेयं मिथिला,

१ तर्हिरत्नावली ?

२ अथ कथयत्वार्य एव ।

३ मिथिलाभर्तुः ?

४ यद्यपि विलम्बो भवति तथापि प्रथमं मिथिलां वर्णयत्वार्यः

---

* अयं प्ररोचनाख्यो नटव्यापारः । यथाह धनञ्जयः । "उन्मुखीकरणं तत्र प्रशंसातः प्ररोचना"

† विलसति विमला कमला, कमलावलिकलितकलितटा ।
कमलेव द्रवरूपा, विलोड़यन्ती यदीयरेणुकणान् ॥ १० ॥

किञ्च,

* मित्राणांसहकारेण सहकारतरुव्रजे ।
गायन्ति रसिका यत्र गीतीर्विद्यापतेः कवेः ॥ ११ ॥

या पण्डितानामपि सत्कवीनां, धर्माश्रितानां जनिभूः प्रसिद्धा ।
आश्रित्य यामऽत्रजनोऽपि नूनं, सुबुद्धिभागेव भवत्यऽजस्रम् ॥१२॥

न० ।—१ ता किं जादा एत्थ वहवो पण्डिदा ?

सू० ।—अत्रापि सन्देहः ? सेयं मिथिला,

§ आखण्डलः पण्डितमण्डलेषु,
यत्राऽभवन्मण्डनमिश्रनामा ।
आर्या तु स्वार्याऽपि सती यदीया,
समभ्यगाच्छत् सकलं हि शास्त्रम् ॥ १३ ॥

---

१ तत्किं जाता अत्र वहवः पण्डिताः ?

---

† विलसतीति । कमलानाम्नी नदी शेषं स्पष्टम् ।

* मित्राणामिति । यत्र रसिका आम्रद्रुमवृन्दे प्रेयसां साहचर्य्येण विद्यापतेः कवेः (मैथिलभाषायां विरचिताः) गीतीः गायन्ति इति तात्पर्य्यम् ।

§ आखण्डल इति । आखण्डल इन्द्रः शेषं स्पष्टम् । एतेन एतत्पत्न्या च सह शङ्कराचार्य्यस्य शास्त्रार्थोजात इति प्रसिद्धा किंवदन्ती इयमुपजातिर्वृत्तिः ।

किंच

वाचस्पतिना तुल्यो, वाचस्पतिपण्डितो यत्र ।
जातः शास्त्रपयोधौ निष्णातो धीरधौरेयः ॥ १४ ॥

न० ।—१ ता किं एसो किदपुस्रो महापण्डिदो सम्बुत्तो ?

स० ।—अथ किं ? तदीयकीर्तिचन्द्रिका कस्य न चेतश्चकोराय रोचते ?

तथा हि

❋ अदर्शनं त्वेष गतोऽस्ति विद्वान्, यशःपयःपाचितभूप्रदेशः ।
तथापिसर्वान् सुखयन्ति तेन, षड्दर्शनानि प्रकटीकृतानि ॥१५॥

किञ्च

विपक्षपक्षक्षयसक्षमोऽत्र, विचक्षणः पक्षधरो बभूव ।
छात्रैर्यदीयैरनवद्यविद्यै,र्विद्योतितं भाति जगत् समस्तम् ॥१६॥

अपि च

नैयायिकसर्वस्वं चिन्तामणिसञ्ज्ञकं ग्रन्थम् ।
यो रचयामास सुधीर्गङ्गेशः सोऽत्र संजातः ॥ १७ ॥

अन्यच्च

मैथिलभाषागीतिप्रबन्धपाटवचितोरुयशाः ।
सिद्धो विद्वानत्रहि विद्यापतिपण्डितो जातः ॥ १८ ॥

न० ।—२ सच्चं सच्चं ( संस्कृतमाश्रित्य )

१ तत्किमेषकृतपुण्यो महापण्डितः संवृत्तः ?

२ सत्यं सत्यम् ।

❋ अदर्शनमिति । अदर्शनं गतोऽस्ति परलोकं प्राप्तोऽस्ति इति यावत् । षड् दर्शनानि प्रकटीकृतानि अर्थात् स्वरचितटीका-द्वारा षड्दर्शनतात्पर्य्याणि प्रकाशितानि ।

कथमिव मिथिलादेशस्तुलनीयोऽन्येन देशेन ।
सुरनिकरवन्दनीया यत्राऽभूद् भगवती सीता ॥ १८ ॥

सू० ।—( सीताशब्दश्रवणानन्देनैव मस्तकमान्दोलयति )

न० ।—( विचार्य पुनः प्राकृतमाश्रित्य ) १ सम्पदं कीदिसो क्खु भट्टा एतस्स देसस्स ?

सू०—( साश्चर्यमुद्रम्. ) किमिव कथयामि ? यावदेतस्य शौर्यं विवर्णयिषामि तावदस्य धैर्यमपि धिषणाधाम अधिरोहति, धैर्यवर्णनाय धृतधैर्यस्य च मम चित्तचकोरस्तच्चातुर्यचन्द्र-चन्द्रिकामिव चुलुकयति, तच्चातुर्यवर्णन मेव शरणीकुर्वतश्च तत्पाण्डित्यमेव मन्मनोमन्दिरमऽवगाहते, एवं हि तद्गुणाजा-लपरतन्त्रं चेतो भवति । हठेन हि तथापि समादिशामि ।

सोऽयं यस्मिन् राज्यं प्रशासति,

* यशोल्लसच्चन्दनचारुचर्चिता,
प्रतापविद्योतितदीपदीपिता ।
तद्वैरिदुष्कीर्तिसुधूपधूपिता,
बभूव भूमिः सुतरां प्रपूजिता ॥ २० ॥

अपि च,

मुक्तामाणिक्यायितयशप्रतापावलिं ललिताम् ।
कलयन्ती निजवक्षसि वसुधा भेजे विलक्षणां शोभाम् ॥ २१ ॥

नटी ।—२ अहो धण्णो एसो कुलपुण्डरीअचण्डंसू राआ ।

---

१ साम्प्रतं कीदृशः खलु भर्ता एतस्य देशस्य ।

२ अहो धन्य एष कुलपुण्डरीकचण्डांशू राजा ।

---

* यश इति । यशसः श्वेतत्वं प्रतापस्य रक्तत्वं दुष्कीर्तेश्च श्यामत्वं कविसम्प्रदायसिद्धम् ॥

सूत्र० ।--प्रिये न केवलमयमेव मतिमन्मान्योऽस्ति किन्तु एतत्पूर्वजा अपि लब्धवर्णवर्ण्या एवाऽभूवन् ।

तथा हि,

रम्यो रामाभिरामश्रीरामोद्दामीकृतद्विषत् ।
स्फूर्जद्दूर्जस्वलयशाः श्रीमान्माधवभूमिपः ॥ २२ ॥

अस्य चात्मजो निखिलां भूमिं युगपदेव स्वकीययशश्छत्रेणाच्छादयन् छत्रसिंहाख्यामाप । स तु महादानी

तथा हि,

⁂ अनवरतदानवारिप्रपातपङ्कीकृतक्षितिविभागाः ।
यस्य गजा अपि कृतिनस्तस्य नु किं वच्मि दानशूरत्वम् ॥ २३ ॥

अथ च,

व्यतरदखिलयाचितं स राजा,
किमिति मृषा कथनीयमत्र वाले ।
अभवदिह न कोऽपि याचकोऽस्मिन्,
जनसुखदे नृपतौ प्रशासति क्ष्माम् ॥ २४ ॥

एतदङ्कपङ्कजक्रीड़ाकोविदस्तु रुद्रसिंहो विश्वम्भरापरिवृढोऽभूत् एतस्य च राज्ये,

§ सुखाभावो येषां कमलजनिनाऽलेखि शिरसि,
स्फुटं तेऽप्यत्राऽसन् बहुतरसुखाः सस्मितमुखाः ।

---

⁂ अनवरतेति । गजपक्षे "गण्डः कटो मदो दानम्" इत्यमरः राजपक्षे च दानवारिपदेन वितरणसङ्कल्पजलं गृह्यते ॥ अथवा यस्य गजाः अनवरतं दानवस्वरूपाणामरीणाम्प्रपातैः पङ्कीकृतक्षितिविभागाः शवलीकृतभूमिभागा आसन् शेषं पूर्ववत्

§ सुखाभाव इति । व्यधिकरणधर्म्मेण दुःखत्वादिना । तथा च

तथा लोके लोकेश्वरलिपिरभूदप्यवितथा,

यतोऽभावस्तेषु व्यधिकरणधर्मेण लसितः ॥ २५ ॥

नटी।—( समन्दस्मितम् ) १ तदो तदो ।

सूत्र० ।—ततश्च तद्गुणैरनून एव श्रीमहेश्वरसिंहोऽभूत् ।

योहि,

दयोदयो दानविदग्धहस्तो, धराधराग्रार्पितशत्रुसङ्घः ।

कलाकलापं कलयन् किलायमहो महोभिर्महितो महेशः ॥ २६॥

किञ्च,

विबुधैः सेव्यमानस्य, सर्वविद्याभिदां निधिः ।

श्रीमहेश्वरसिंहस्य सम आसीन्महेश्वरः ॥ २७ ॥

‡ तस्माच्च सुमनसः सुमनसः फलमिव श्रीलक्ष्मीश्वरसिंहः समजनि । स च महाराजो राज्यं प्रशास्त्येवाधुना । यद्राज्याऽभिषेकोत्सवे एतन्नाटकमप्युदियाय ।

यश्च,

आचारलक्ष्मीमपि राज्यलक्ष्मीम्, माधुर्यलक्ष्मीमपि धैर्यलक्ष्मीम् ।

चातुर्यलक्ष्मीमपि शौर्यलक्ष्मीम्, बिभ्रत्सलक्ष्मीश्वर इत्यभाणि २८

अस्य कविप्रियताविषये च किं वच्मि ! तथाहि,

भवति प्रथमं हि कवीन्द्रगणो, मणिबन्धलसन्मणिबन्धयुगः ।

तदनन्तरमेष करोतितरां, वरवर्णनमस्य नराधिपतेः ॥ २९ ॥

---

१ ततस्ततः ।

---

भवति हि अनन्तसुखसत्वेऽपि दुःखत्वेन सुखं नास्ति इति निर्व्यलीका प्रतीतिः प्रामाणिकानाम् ॥

‡ सुष्ठु मनो यस्य तस्मात् सुमनसः सुमनसः पुष्पात् फलमिवायं महाराजः प्रादुर्बभूव ॥

किञ्च, सोऽयं,

यो दृत्ततां संसदि सत्कवीनां, नरप्रभुर्मान्यितमो बिभर्ति ।
शुभप्रदः सेवनतत्पराणां, गङ्गातरङ्गाच्छयशः प्रचारः ॥ ३० ॥

नटी ।—१ अज्ज एतस्स मिधिलाभत्तुणोराअहाणी का ?

सूत्र० ।—प्रिये एतत्पद्यस्यैव प्रतिपदं द्वितीयाक्षराणि योजयित्वा जानीहि ।

नटी ।—( तथा गणनं नाटयित्वा ) २ ता किं दरभङ्गा ?

सूत्र० ।—एवम,

* स्वाश्रितसकलजनानां, सुतरां भयभञ्जनान्नितराम् ।
नगरी गरीयसीयं, दरभङ्गाख्यामवाप रुचिरतराम् ॥ ३१ ॥

नटी ।—३ अध को एदस्स नाड़अस्स कवी ?

सूत्र० ।—जातो जयपुर नगरे, वाराणस्यां तथा कलितविद्यः ।
सत्वरकवितासविता, गौड़ः कोप्यम्बिकादत्तः ॥ ३२ ॥

नटी ।—४ तहिं एदं जेव्व कीलिदं भोदु ।

नेपथ्ये । ( उच्चैः ) ५ भोदु भोदु भोदु

१ आर्य एतस्य मिथिला भर्त्तू राजधानी का ?

२ तत्किं दरभङ्गा ?

३ अथ क एतस्य नाटकस्य कविः ?

४ तर्हि इदमेव क्रीड़ितं भवतु ।

५ भवतु, भवतु, भवतु ।

* दरं भयं भनक्ति इति दरभङ्गा ( दरत्रासौ भीतिर्भीः साध्वसं भयमित्यमरः )

( नटी सूत्रधारश्च तदऽभिमुखं पश्यतः )

नेपथ्ये ( पुनः सहासम् ) १ ही ही भोः एदं एदं एदं जेव्व, एदं जेव्व कीलिदं भोदु ।

सूत्र० ।—प्रिये बहुविलम्बितं पश्यैष बन्धुजीवः समायाति आरब्धोऽधुना कुशीलवैरभिनयस्तत् सत्वरं गम्यताम् गृह्यतां च नेपथ्यम् ।

( द्वौ अपि निष्क्रान्तौ )

( प्रस्तावना )

## ( पटीक्षेपः, स्थानं, मुनीनामाश्रमप्रान्तः )

( ततः प्रविशति सोत्फालं हसन् बन्धुजीवः )

बन्धु० ।—२ हीही भो ए—ए—ए—एदं, एदं जेव्व । अज्ज चकिदो भविस्सिदि सामवं हीही । भोदु कीलिदं, भोदु कीलिदं भोदु एदं जेव्व कीलिदं । ( क्षणं परिक्रम्यावलोक्य च ) एसो आअच्छदि सुमेधा सामवं वि । ता अहं अस्सिं जेव्व पलासपादपिट्ठे समच्छण्णो चिट्ठामि । जस्सिं क्खणे सामवं आस-

१ एतदेतदेतदेव, एतदेव क्रीडितं भवतु ।

२ ही ही भोः—ए—ए—ए—एतदेतदेव । अद्य चकितो भविष्यति सामवान् । हीही । भवतु क्रीड़ितं, भवतु क्रीड़ितं भवत्वेतदेव क्रीड़ितम् ।···एष आगच्छति सुमेधाः सामवानपि । तदहमस्मिन्नेव पलाशपादपपृष्ठे समाच्छन्नस्तिष्ठामि यस्मिन् क्षणे सामवाना सन्नो भविष्यति झटिति तस्मिन्नेव क्षणे अहं वलीयः क्षिक्षिष्या म । एतदेव क्रीड़ितम् अत्र तातसारस्वतस्तातवेदमित्रोऽपि आसन्नस्तिष्ठतीति तर्कयामि । तत् तत्रैव गत्वा क्रीडितं करिष्यामि एतदेव क्रीड़ितं भो एतदेतत् ।

णो भविस्सदि झडित्तितस्सिं जेव्व क्खणे अहं बलियं छिक्किस्सं, एदं जेव्व कीलिदं । एत्थ तादसारस्सुदो तादवेदमित्तोवि आसणो चिट्ठदित्ति तक्के मि ता तहिं जेव्व गदुअ कोलिदं करिस्सम्। एदं जेव्व कीलिदं भो एदं एदं ।

( हसन् सोत्फालं निर्गच्छति )

## ( ततः पटोत्क्षेपेण प्रविशतः स्वाश्रमस्थौ सारस्वतवेदमित्रौ )

सार० ।—सखे वेदमित्र, धन्यावावां यथा खलु आवयोर्मैत्री वर्तते तथैव सवयस्कयोः सरूपयोः सतीर्थ्ययोरस्मत् त्वयोः सामवस्स-मेधसोरपि मैत्री संवृत्तेति ।

वेद० ।—तत्रापि एतयोः सौशील्यं तु अधिकं चेतोहरम् ।

सा० ।—किन्तु अधुना अमू बाल्यात् परं वयोषणुवाते तच्चिन्तय अनयोर्विवाहकृत्यम् ।

वे० ।—( क्षणं विचिन्त्य ) सखे सत्यं परञ्च, यद्यपि कन्या, कन्यादाता, कन्या प्रतिग्रहीता चेति सामग्रीत्रितयं सामग्र्यन्तरं नापेक्षते तथापि सकलसामग्रीमूलभूतं द्रव्यं विना न शोभते विवाहमहोत्सवः । तदऽस्मिन्नुत्सवे, यदि जयशब्दमुच्चरन्तो याचकाः समायास्यन्ति तेभ्यः किं दास्यावः देहीत्युक्ते नेति च कथं कथयिष्यावः । यतः ।

देहीति वदति भिक्षौ नेति च कथने सतां तु कण्ठपथे ।
सङ्कीर्णे भवति रणो वाग्जीवितयोः पुरस्सरणे ॥ ३३ ॥

सा० ।—मित्र यद्यपि तपोबलेन सर्वं सम्पादयितुं शक्यं तथापि इमौ नेदीयांसमेव विदर्भमहाराजम् ( इत्यर्द्धोक्ते वामवाहु स्फुरणं नाटयन् विरमति )

वे०।—विदर्भमहाराजं किम् ?

सा०।—मित्र कथं मे वामबाहुस्फूर्त्तिः ? यत्सत्यं कम्पितमिव मे हृदयम्।

वे०।—( चणं विभाव्य ) मित्र शकुनेषु व्यभिचारोपि भवति तथापि संस्मर विघ्नविनाशकं गणेशम्।

सा०।—सत्यम् ( करौ सम्पुटोकृत्य )

† गाणेशं पदकमलं कमलंकर्तुं समर्थं न।
गायन् यन्महिमानं मानं प्राप्नोति मानवो नित्यम् ॥ ३४ ॥

वे०।—( चणानन्तरम् ) अथ समापय किन्ते विवचितमासीत्।

सा०।—एतदेव यद् एतौ विदर्भमहाराजं स्वविद्यया सन्तोष्य धनमानयताम् इति।

ने०।—आगामिनः सुमेधसः स्वरेण )

मित्र न्यायशास्त्रं स्वयं कीदृगप्यस्तु परं वादे जयं ददात्येव
तथाहि

वेदान्तिनश्च पटुपाणिनिशास्त्रशस्त्राः,
सङ्ख्यायुता बहुलसाङ्ख्यविदां गणे च।
संरुद्धबुद्धिबलसङ्कुचिताधरास्याः,
दृष्ट्वैव तार्किकमुखं सभया भवन्ति ॥ ३५ ॥

( उभौ नेपथ्याभिमुखमवलोकयतः—पुनरागामिसामवत्स्वरेण )

सत्यम्,

कुर्वन्तु गण्यगणितं गणका गणे स्वे,
साङ्ख्या वदन्तु बहु सत्त्वरजस्तमांसि।
न्यायाद्रिकन्दरहरिर्हि जयं दधाति,
शाब्दश्च घोषयतु किं बहु हृद्दिरादैच् ॥ ३६ ॥

---

† गाणेशमिति। कम् अलंकर्त्तुं कमलंकर्त्तुं शेषं स्पष्टम् ॥

सार० ।—पश्य छात्रमण्डलसहितौ पुत्रावपि समायाताविव ।
( ततः प्रविशतःकतिपयैः सतीर्थ्यवयस्यैः सहितौ सामवत्सुमेधसौ )

सामवत्सुमे० ।—- आवां नमावः पितरौ भवन्तौ, ( इतिप्रणमतः )

सारस्वतवे० ।—आगच्छतामत्र सुतौ सुशीलौ । ( इति समीपे उपवेशयतः )

वयस्याः ।—-अस्माकमप्यस्तु नमो भवद्भ्याम्, ( प्रणमन्ति )

सारस्वतवे० ।—स्थिता भवन्तोपि भवन्तु भद्राः ॥ ३६ ॥ ( सर्वे उपविशन्ति )

वेद० ।—सुतौ सम्यगधीतं भवद्भ्याम । वेदान्तस्य वेदान्तं सामवांस्त्वं च, युवां साङ्ख्यवेदगणे सङ्ख्यागलप्सायां, पाणिनीयं, पाणिनीतमिवाक्षषायां, न्यायतो न्यायमधीतम् अनवद्यगद्यपद्यविद्यया निर्मलं यशश्च अभूषाथाम् ।

सार० ।—अधुना चेमं धर्मसिन्धुं विदर्भ राजं प्रसाद्य धनमासाद्य समागच्छतं यथा भवत्परिणयपरिपाटीं निर्वर्तयावहे । यतः समागतं यौवनेन युवयोरङ्गे । ( सामवत्सुमेधसौसलज्जमधोवदनौ तिष्ठतः । सारस्वतवेदमित्रौ गमनदिनं निर्णयतः )

साम० ।—( सुमेधसं स्वं चावलोक्य स्वगतम् . )सत्यमागतं यौवनेनावयोः शरीरे .

तथा हि

लुलद्रोलम्बाली कलितकमलस्पर्द्धिरुचयः ,
कटाक्षा बालानां प्रकृतिचपला घ्नन्ति हृदयम् ।
स्मरः किञ्च स्मित्वा रतिहृतमतिः पुष्परचिताम् ,
स्वबाणानाधत्ते निजधनुषि टङ्काररुचिरे ॥ ३७ ॥

सार० ।—( वेदमित्रेण सह सम्मन्त्र्येव गणयित्वेव च )

सार० ।—अथ संप्रत्येव तु शुभं लग्नमस्ति तद् मङ्गलाचार पुरस्सरं गम्यताम् । आशिषश्च मे सत्याः सन्तु यत्,

जित्वा विवादे बहुवादिविज्ञान्, वित्तं गृहीत्वापि च राजदत्तम् ।
सानन्दमत्रागतयोः शुभंयु, भूयाद् विवाहो भवतोर्भवाय ॥३८॥

नेपथ्ये ।—( बन्धुजीवस्वरेण )१ सच्चं सच्चं "भूयाद् विवाहो भवतोर्भवाय" ( सर्वेषु पश्यत्सु सकूर्दनं प्रविश्य ) ता किं दुण्णं परप्परं जेव्व विआहो होस्सदि ?

वेद० ।—हताश पुरुषयोरपि परस्परं विवाहो भवति ?

बन्धु० ।—२ तर्हि एकस्स इत्थिअत्तणं कहिं वि करणिज्जम् । होदु सव्वं घड़ेदि विही । ( सर्वे हसन्ति )

सार० ।—( जनान्तिकम् ) मित्र वेदमित्र किमाशंसित मेतेन यत् पुनः सत्यं कम्पितमिव मे हृदयम् ?

वेद० ।—(सहस्तग्राहं) मन्ये दौर्बल्यमेतद् वार्द्धक्यपराभूतस्य हृदयस्य । तथापि बालयो रक्षां विदधामि ( इति स्वजटाजूटाद् बिल्वपत्रद्वयं निष्कास्य ) ( तनयाभिमुखम् ) वत्सौ, गृह्येतामिमे विल्वपत्रे स्थाप्येतां च शिखाग्रे यथा वीरभद्रो वां रक्षां विधास्यति ।

( उभौ गृहीत्वा तथा कुरुतः )

सारस्वतवेदमित्रौ ।—( वैदिकस्वरेण )

---

१ सतरं सत्यं तत्किं द्वयोः परस्पर मेव विवाहो भविष्यति ।

२ तर्हि एकस्य स्त्रीत्वं कथमपि करणीयम् । भवतु सर्वं घटयति विधिः ।

*स्वस्ति व इन्द्रो वृद्धश्रवाः, स्वस्ति वः पूषा विश्ववेदाः ।
स्वस्ति वस्तार्क्ष्योऽरिष्टनेमिः, स्वस्ति वो बृहस्पतिर्दधातु ॥ ३९॥

बन्धु० ।—१ सुत्थि सुत्थि मङ्गलसमये लड्डुवं बम्हणाय ।

नेप० ।—कथमग्निहोत्रसमयोतिपात्यत आचार्यचरणैः ।

वेदमित्रः ।—( नेपथ्याभिमुखमवलोक्य ) अये यज्ञदत्त अपि परिष्कृतमखिलम् ?

नेपथ्ये ।—आज्यं तिला यवा दर्भाःपुष्पाणि स्रुचं तथा स्रुवम् ।
प्रोक्षणी च प्रणीता चेत्यादि सर्वं परिष्कृतम् ॥ ४० ॥

सारस्वतः ।—तद् यज्ञभूमिमपि प्रदक्षिणी कृतत्र गम्यताम् ।
सैषा यज्ञभूमिः याम्, ।
तिलाज्यप्राज्यगन्धेन घनवत्सं प्रसारिणा ।
प्रवेष्टुं नैव शक्नोति धूमेनान्धीकृतः कलिः ॥ ४१ ॥

बन्धुजीवः ।—२ अए जण्णदत्त लड्डुवंवि पडिक्किदम् ?

( सर्वे परिक्रम्य गच्छन्ति )

## ( पटीक्षेपः वनम् )

( ततः प्रविशति धूमव्याकुलित इव भयङ्कररूपः कलिः )

कलिः ।—(ताम्यन्) अरे अरे अरे, क्व यामि, किं करोमि, नास्ति मे शरणम् । अहह काशीकाञ्च्यादितीर्थताड़ितः कथमपि वनं प्रविष्टोस्मि परमहह अत्र तु यज्ञधूमैरेव अन्धीकृतोऽस्मि

१ स्वस्ति २ मङ्गल समये लड्डुकं ब्राह्मणाय ।
२ अये यज्ञदत्त लड्डुकमपि परिष्कृतम् ।

* स्वस्तीति ॥ अत्र नःस्थाने वोनिर्द्देशात् तदानुपूर्वीभङ्गात् न वेदमन्त्रत्वं न वा तदुच्चारणस्य शूद्रसाधारण्येपि प्रत्यवायापादकत्वम् ।

( परिक्रम्य ) अहो धूमो रे धूमः ( चक्षुषी सम्मृज्य ) आः क्व यामि धर्म एष पापो मां पीड़यति ( आकाशे दृष्टिं बद्ध्वा ) अरे रे धर्म,

माध्वीकोन्मत्तनेत्रो लशुनरसकणक्लिन्ननिःश्वासवातो,
गोरक्तारक्तदन्तो द्विजनिकररिपुर्यावनीबद्धवार्त्तः।
वेदच्छेदेष्वखेदः प्रविघटनपटुर्भक्तिभावस्य भूतेः,
काकाली कालकान्तिः कलिरिह कुहकः कोपितः कस्य हेतोः४२

नेप०।—अरे कस्त्वं मुनेराश्रमसमीपे क्रूरं गर्जसि ?

कलिः।—अरे रे।

भ्रातरं भ्रूणहत्याया मद्यपानस्य मातुलम्।
गोहिंसाया गुरुवरं कलिं वेत्सि न मूर्ख माम् ॥ ४३ ॥

नेप०।—तद् गच्छ शौण्डिकालयम्। मुनिमण्डले ते क्वावस्थानम्।

कलिः।—अस्ति। अस्मिन्नेव दुर्वाससउटजे मम प्रियमन्त्री क्रोधो निवसति तत्रैव गच्छामि।

( परिक्रामति )

नेप०।—( बन्धुजीवस्वरेण )

" मङ्गलं भगवान्विष्णुः "

कलि०।—( सवक्षस्ताड़नम् ) हा हतोस्मि हतोस्मि हतोस्मि रे एतद् भगवन्नाम कीर्तनेन ( इतस्ततः पलायमानः क्रन्दमानो निष्क्रामति )

बन्धुजीवः।—( प्रविश्य ) १ कुदो भल्लूओ विअ पलाइदो ( परि-

---

१ कुतो भल्लूक इव पलायितः……तिष्ठ रे दुष्ट तिष्ठ यावदहं त्वां निर्वासयामि।……। कथमिव परिभ्रष्टोसमि सामवत्सुमेधसोः सङ्गात्। तद् गृहमेव गच्छामि।

तोविलोक्य.) चिट्ठरे दुट्ठ चिट्ठ जाव अहं तुवं णिव्वासेमि।

(विचार्य) कहिं वि पडिब्भट्ठोम्हि सामअच्छ्र मेधसाणं सङ्गादो? ता घरं जेव्व गच्छम्हि। (निर्गच्छति)

(ततः प्रविशतः पुष्पमालां बिभ्राणौ साक्षतकुङ्कुमतिलकौ सामवत्सुमेधसौ)

साम०।—अहो खणिकोपि तात विरहो दुःखा करोति

सुमे०।—परमयमेव तु अस्मासु विशेषः, यत्,

इतरे व्याकुलाः सन्तो भवन्त्यन्यैः प्रबोधिताः।
आत्मनैवात्मसम्बोधो सुनिपुत्रैर्विधीयते॥ ४४॥

(परिक्रम्यावलोक्य च) पश्यैतद् विपिनम्.

वार्भिर्मरन्दमधुरैरुत निर्झराणां,
दिव्यैः फलैर्मलयमारुतदोलितैश्च।
वातैः सगन्धकदलीदलवीजितैश्च,
श्रान्तान् सदैव पथिकानिदमर्चति स्म॥ ४५॥



(कपोतकुटकूजनमिवानुभूय) इतश्च पश्य,

अस्मिंस्तमालविटपे छदमध्यवर्त्ती.
कूजन् कलं किल विभाति सितः कपोतः।
चन्द्रः किमिष तमसा विनिगृह्य बद्धो,
मोक्तुं करोति विनयं मृदुना स्वरेण॥ ४६॥



साम०।—(परितोविलोक्य) सत्यं विदर्भविषय एषः,

नवकुले र्वकुलैः परितो वृता,
न विटपा विटपा इह सन्त्यमी।
नवनगा वनगा विलसन्त्यत्र हो,
न रमणी रमणीय इह प्रभुः॥ ४७॥

किञ्च।

*कथमिह पथि पथिकजनो विन्देतामन्दमानन्दम्।
यदि तरुनिकरः स भवेत् फलपुष्पच्छदभुजो न वने ॥ ४८ ॥

सुमेधा: ।—( पिकरावमिवाश्रुत्य ) सखे इतो ऽवधेहि, पश्य,
मन्दान्दोलितकुसुमैर्मिलन्मरन्दैः पलाशिवृन्दैः किम्।
यदि चेत् स्युः कलकण्ठा रसालनवमञ्जरीभुजो न वने ॥४९॥

( उभौ परिक्रम्य परितोऽवलोक्य गमनं नाटयतः )

साम० ।—अहो महान् ऋषिसमुदायो ऽनुमीयतेऽत्र वेदर्भवने,
यतः,
नवपत्राऽत्र कुशलता न कुशलतां सम्बिभर्ति मृत्खाता।
धूमश्यामपलाशास्तरवो रुरवो नृभयरहिताः ॥ ५० ॥
किञ्च
श्यामाकशोभिदशनोशनमद्य कृत्वा,
गच्छत्ययं तु शशकः शशभृत्कलेव।
मन्ये महर्षितनुजाकरलालितोऽस्ति,
लोलः कलः पुलकितो ललितःसुलोमा ॥ ५१ ॥

सुमे० ।—सत्यं सन्त्यत्र वहवो मुनयः।
किं नपश्यसि,
शाखा नता विटपिनां फलपुष्पशून्या,
उच्चाः फलानि कलयन्ति च पुष्पगुच्छान्।
लोलत्तिला विविधनिर्झरवारिधारा,
लिप्तानि साचतसुमानि च भूतलानि ॥ ५२ ॥

---

* कथमिहेति ॥ अस्मिन्नेतदग्रिमे च "भुजोनवने" इतिपाणिनीयसूत्ररूपसमस्यायाः पूर्त्तिरपि भवति ॥

नेप० ।--( मृदङ्गसहकारेण वीणा वाद्यते आलप्यते च ) उभौ सचकितं निपुणं निरीक्षेते )

साम० ।—अहो एते मधुरमभिहन्यमानमृदुमृदङ्गसङ्गिसङ्गीतरुचिराः वीणाक्वणितसहचराः स्वरालापाः कुतः श्रूयन्ते ?

सुमि० ।—( विचार्य्य ) नूनमऽस्मादेव माधवीलतानिकुञ्जात् ।

साम० ।—अहो महिमा स्वरविद्यायाः । इतः पश्य, इमे रसालमञ्जरीजम्नचञ्चवोप्यनास्वादयन्तः, अर्द्धोन्मीलितनयना वाचंयमाः, शुकपिकसारिकादयः, आनन्दवशंवदा इव रुञ्जाताः । द्रुमा-अपि च मन्दमन्दविगलन्मरन्दानन्दाश्रुभिः पुलकं प्रकटयन्तीव ।

सुमि० ।— सत्यमीदृश एव महिमा सङ्गीतस्य ।

तथा हि,

प्राणानप्यपहाय मञ्जुल वनाद् धावन्ति नूनं मृगाः,
त्यक्त्वा कुण्डलमुन्नतोन्नतफणाः स्व स्वालयाद् भोगिनः ।
आनन्दं परमाप्नुवन्ति च यतो मतर्ग्रा अमतर्ग्रा अपि ,
सोयं मोहनमन्त्र एष विधिना सङ्गीतसंज्ञः कृतः ॥ ५३ ॥

साम० ।—( सानुभवमिव ) अहो,

एतल्लौकिक नादस्य माहात्म्यं प्रविजृम्भते ।
योगिश्राव्यस्य नादस्य कथनीयं तु किं पुनः ॥ ५४ ॥

सुमि० ।—( क्षणकतिपयानन्तरम् ) अहो हारिण एते स्वरालापास्तत् तत्रैव उपसर्पावः ।

साम० ।—सत्यम् अहमपि परवान् संवृत्तोऽस्मि तद् दृश्यताम् ।

§ धातुसूत्रसमायुक्ता साधुशब्दस्य साधिका ।

---

§ धातुसूत्रेति । वीणापक्षे धातूनां लोहपित्तलादीनां सूत्रैः समायुक्ता साधोः कर्णरसायनस्य च शब्दस्य मूर्च्छनादिमयस्य सङ्गी-

क्व वाद्यत इयं वीणा पुस्तिका व्याकृतेरिव ॥ ५५ ॥

( उभौ स्वरसन्धानेन गमनं नाटयतः )

नेप०।—( स्त्रीस्वरेण ) १ सहि मदालसे बहुगाइदं अधुणा उट्ठेहि तिविट्ठवं गच्छेम्ह ।

नेप०।—( पुनःअपरस्त्रीस्वरेण ) २ चिट्ठ इन्दुवदणि चिट्ठ एक्कं अवरं बि गाइस्सं। दाव वसन्तसुरालावं विधेहि ।

साम०।—( अवधाय ) स्त्रियोरिवालापः

सुमेधाः।—तत्रापि स्वर्गैकसोः।

साम०।—अमुयोरेकतरा नाम मदालसा अपरतरा इन्दुवदनेत्यपि ऊरीकृतम्।

सुमे०।—अहो अवश्यं दर्शनीयसौन्दर्ये इमे तत् सत्वरमुपसर्पावः।

( उभौ पुनरुपसर्पणं नाटयतः )

( नेपथ्ये वीणया सममिन्दुवदनास्वरालापाः )

साम०।—( तिदृष्ट्वेव शनैः ) पश्य पश्य इदमितः स्त्रीरत्नम्। (उभौ नेपथ्याभिमुखमवलोकयतः )

सुमे०।—( निपुणं निभाल्य ) अहो शोभा एतदङ्गानाम्,

तथा हि।

एतया स्मितमात्रेण चन्द्रो निष्किञ्चनी कृतः।
तदीयतापसन्तप्तः चयोति परिगीयते ॥ ५६ ॥

---

१ सखिमदालसे बहु गीतमधुनोत्तिष्ठ त्रिविष्टपं गच्छावः।

२ तिष्ठ इन्दुवदने तिष्ठ एकमपरमपि गायिष्यामि ॥

---

तानुकरणस्य साधिका॥ व्याकरणपुस्तिकापक्षे तु धातुनिर्देशैः सूत्रनिर्देशैश्च समायुक्ता साधुशब्दस्य प्रामाणिकप्रयुक्तस्य वाक्यैकदेशस्य च साधिका ॥

साम०।—सतंत्र, पश्य कथमिव शोभन्ते हारपर्य्यन्तं विलुलिता अ-
सत्राः कुञ्चितकचाः।

सुमे०।—किं पश्येयम्,

† बाला बिभ्रति मुक्तिं मुक्ता अपि बन्धनैर्बद्धाः।
विद्गणद्धि हन्त बाला सर्वं वेदान्तसिद्धान्तम्॥ ५८॥

साम०।—(विलोक्य) परमेकं चित्रमिवावभाति यदेषा विरहि-
जनमनोभेदननिर्दये हृदये कुचकुम्भगलितस्वर्धुनीवारिधाराप्र-
चारमिव मुक्ताविहारं तारच्छबिहारं धारयन्ती; चरणेन च ता-
रकापटलपरिस्पर्द्धिमणिगणरञ्जितम्, बदनक्षतबहुलधिक्कारजा-
तलज्जया पादयोः पतितमिन्दुमिवमञ्जुलमञ्जीरंशोभयन्ती,
शिरसा च वेणी फणिमणिमिव चूड़ामणिं विरोचयन्ती, कूर्प-
राभ्यां च शृङ्खलाबद्धयुवजनमनःसमूहमिव मौक्तिकभूषणं भूष-
यन्ती अपि कथमियं नासायां मणिमुक्तादीनपहाय गुञ्जां धार-
यति।

सुमे०।—(गम्भीरं निरीक्षते)

साम०।—अथवा धन्यैषा गुञ्जा, या,

पूर्वं निजायां व्यलसल्लतायां, च्युता च चामीकरतोलिताऽभूत्।
ततोथ वामावरनासिकाऽग्रे, विन्यस्यते वा मुकुटे मुरारेः॥५९॥

अपि च।

जानीहि हाटक निजं बहु धन्यधन्यं,
यद् गुञ्जयाऽद्य तुलितं ललितं न चेद् भोः।
क्व त्वं प्रियाचरणनूपुरबन्धयोग्यं,

---

† बालाइति। बालाः केशाः अज्ञाश्च, मुक्ता मुक्ताफलानि प्राप्त-
मोक्षाश्च शेषं सुगमकम्॥

कैषा तदीयमुखचुम्बनचञ्चुरास्ति ॥ ६० ॥

सुमे०।—सामवन् भ्रान्तोसि।

साम०।—कथमिव।

सुमे०।—पश्य नेयं गुञ्जा। अपि तु,

नयनाधरकान्तिभ्यां रञ्जितं भागयोर्द्वयोः।

मुक्ताफलमिदं भाति मञ्जु गुञ्जाञ्चितच्छवि ॥ ६१ ॥

( उभौ स्मितं कुरुतः )

साम०।—अथागच्छ माधवीलतातिरोहिताविव सङ्गीतं शृणुमः

( उभौ यथोक्तरूपं नाटयतः )

( ततः प्रविशति पटीक्षेपेण यथावस्थिता मदालसा इन्दुवदना च )

मदालसा —( गायति )

१ महुअरझङ्किदमहुरो । कयविरहिदजणविहुरो ॥
पसरिददक्खिणपवणो । मअणमहूसवभवणो ॥
कोइलकूजिदसहिदो । सोहणमण्डलमहिदो ॥
हिअअं कुसुमलसन्तो । कस्स ण हरदि वसन्तो ॥ ६२ ॥

साम०।—( शनैः ) अहो माधुर्यं सङ्गीतस्य।

सुमे०।—अपि वीणारणनमवधेहि पश्य,

तूर्णं यस्मिन् स्फुरणसुचितं घर्षणं कम्पनं च,

---

१ मधुकरझङ्कृतमधुरः । कृतविरहितजनविधुरः ॥
प्रसरितदक्षिणपवनः । मदनमहोत्सवभवनम् ॥
कोकिलकूजितसहितः । शोभनमण्डलमहितः ॥
हृदयं कुसुमलसन् । कस्य न हरति वसन्तः ॥

स्त्रीकर्तव्या किल तरलता मन्दता वै कदाचित् ।
उत्प्लुत्याशु प्रयतनमयो सर्पणं वै तथेत्थं,
वीणावाद: क्व कठिनतर: कोमला चाङ्गुलि: क्व ॥ ६३ ॥

इन्दुवदना ।—१ सहि सुलहकोवस्स दुव्वासस्स अस्समसमीवे गो-
चिदं चिरं अवट्ठादुं ता गच्छेम्ह ।

मदालसा ।—२ गमोअदि क्खणं चिट्ठ ( पुनर्वारयति )

नेप० ।—( दूराहूति: ) सामवन्, सामवन् ।

नेप० ।—( पुन:निकटत इव ) अरे रे सामवन् मां दुर्वाससं न जा-
नासि ? ( एते अनुश्रवन्तइव तिष्ठन्ति )

( तत: प्रविशति रङ्गभूमिकोणैकदेशे कोपकषायितलोचनो
दुर्वासा: ) ( तेषु स्वकार्यासक्तेषु एनमपश्यत्सु ।

दुर्वासा: ।—अरे त्वं मन्मित्रस्य सारस्वतस्य पुत्र इति त्वां सच्चिकी-
र्षुरासम् परं त्वं तु शापसत्कारायैव त्वरितोसि, अस्तु रे,
स्त्रियं विलोकयन् यत् त्वं, मामवज्ञातवानसि ।
स्त्रीरूपमचिरादेव, तस्मात् त्वं कलयिष्यसि ॥ ६४ ॥
( इति निष्क्रान्ता: )

साम० ।—( स्वगतम् ) अहो कथमिव चेतो हरति कामिनी !
अयि नूनम् ।

* आक्षुष्यमाणं पितरं विलोक्य, मनस्त्वया दीनतरं मनोभू: ।

---

१ सखि सुलभकोपस्य दुर्वासस आश्रमसमीपे नोचितं चिरम-
वस्थातुं तद् गच्छाव: ।

२ गम्यते क्षणं तिष्ठ ।

---

* आक्षुष्यमाणमिति । ज्वलधातोर्घटादित्वात् "घटादयोमित"
इत्यनेन मित्वं " मितां ह्रस्व: " इत्यनेन च ह्रस्व: अस्य च उपस-
र्गसहचारे नित्यं मित्त्वम् अत आह संज्वल्येति ॥

, ददाह देहं किल लज्जयेव ॥६५॥

नेप० ।—( सकलकलम् )

शुण्डादण्डाकर्षैः कुम्भाघातैश्च पातयन् वृक्षान् ।
अयमहह मत्तहस्ती सर्पति सर्वे पलायध्वम् ॥ ६६ ॥

*( कुतः कुत इति सचकितं विलोक्य मदालसेन्दुवदने आकाशमार्गेण स्वर्गच्छतः, सामवत्सुमेधसावपि निष्क्रान्तौ )

( जवनिकापातः )

## ( समाप्तोऽयं प्रथमोऽङ्कः )

## द्वितीयाङ्कपात्राणि ।

१ जटिलः
२ राजभटः
३ अमात्यः
४ बसन्तकः
५ सुमेधाः
६ सामवान्
७ देवशर्मा
८ धर्मसिन्धुः ( महाराजः )
९ भावकलावती
१० चारणः
११ राजपरिवारः

* इदमवपाताख्यं नाटकाङ्गं यथाह धनञ्जयः । " अवपातस्तु निष्क्रामप्रवेशौ त्रासविद्रवैः " ।

# अथ द्वितीयोऽङ्कः ।

( जवनिकापसारणं, स्थानं विदर्भनगर्य्याश्चतुष्पथम् )

( ततः प्रविशति अभ्रककुङ्कुमलिप्तमुखः पटान्तेन मृजन्निव श्लथज्जिह्वः क्रुद्धो जटिलो बधिरो ब्राह्मणः )

जटिलः ।—( अति क्रोधेनास्पष्टाक्षरम् सवीप्सं च ) ध धद् धिक् धिक् धिक् रे मूर्खाः । ततत् तिष्ठत तिष्ठत कक्कुतः पप्पलायध्वे ।

( नेपथ्ये करतलध्वनिसाहचर्येण बालकलकः )

जटिलः ।—ककक् क एष भभभभ् भूताडम्बरः । कथं नन्नन् न कोपि ततततत्तत् ताड़यति एतान् चचच्चच् चाण्डालहतकान् ( सकम्पमुत्तरीयेण कटिंबध्नन् ) हहहह होलिका होलिका होलिका । चचच् चक्षुःस्फ फ्फ फोटनमेव किं होलिकोत्सवः ( दण्डमुद्यम्य ) ततत् तिष्ठत, अधुनैव ददद्दण्डेनानेन युष्माकं कपालानि खखखख् खख् खख् खण्डशः करोमि । ( इति धावति )

( नेपथ्ये ) ( सकलकलम् ) १ हा हदम्हो एदेण बुड्ढेण बम्हणबाणरेण ।

प्रविश्य राज भटः ।—२ हंहो बम्हण चिट्ठ चिट्ठ ।

जटिलः ।—( अवलोक्य ) रर रे त्वमपि किं प्रलपसि दुष्ट दुष्टेति ! रे मसम् मूर्ख त्वं दुष्टः त्वत्पिता च दुष्टः ।

राजभ० ।—३ हंहो ण कहेमि दुट्ठ दुट्ठ इति, णं कहेमि चिट्ठ चिट्ठ ।

जटि० ।—अरे रे ननन् नासिकाहीनः, ददद् दुष्ट दुष्टः, ननन्

---

१ हा हतास्म एतेन वृद्धेन बानरेण ।

२ अरे ब्राह्मण तिष्ठ तिष्ठ ।

३ हंहो न कथयामि दुष्ट दुष्ट इति, ननु कथयामि तिष्ठ तिष्ठ

नरकगामी, चचच् चौरदुष्टश्च त्वं त्वत्पिता त्वत्पितामहश्च ( दण्डमुद्यम्य ) ददद् दूरतो भव।

राजभ०।—( स्वगतम् ) १ ता किं वहिरो एसो कुड वम्हणो! सच्चं तहिं विअ तक्केमि, ता किं करणिज्जम्। ( अञ्जलिं बद्ध्वा प्रकाशम् ) एसो दे अञ्जलो विहिदो खमस्स णाहं गालिं कहेमि।

जटि०।—( तास्यन् ) अरे पपप्पप्पप् पाटच्चर किं कथयसि 'एवं अञ्जलिं कुरु बद्ध्वा क्षणाद् नाथगेहं नयामि'?

राजभ०।—२ हीमाणहे वज्जवहिरो क्खु एसो। ( नेपथ्याभिमुखमवलोक्य ) परित्ताअदु २ अमच्चो।

( प्रविश्य अमात्यः ) अरे खञ्जक क एष महाकोलाहलो नगरे?

राजभटः।—( साञ्जलि ) ३ अज्ज होलिआणिवन्धणो एसो बालओलाहलो।

जटिलः।—अमात्य ससम् सर्वमेष मिथ्या वदति न मया कककिमप्यपराद्धम्।

अमात्यः।—( तमवलोक्य पुना राजभटम् ) तत् किं सर्वेऽप्यद्य बालाः सम्पन्नाः?

जटिलः।—( राजभटमुद्दिश्य ) पपप् प्रपितामहे समायाते किमिव तूष्णीकः ससम् संवृत्तोसि? कथय किमर्थमहमवाच्चैरऽवहेलितः? ( क्षणं विरम्य। अरे वज्रबधिर न शृणोषि? कठिनं बबब् बधिरस्य जीवितम्।

१ तत्किं बधिर एष कुडब्राह्मणः? सत्यं तथैव तर्कयामि। तत्किं करणीयम?……एष ते अञ्जलिर्विहितः क्षमस्व नाऽहं गालीं कथयामि।

२ अहो हे वज्रबधिरः खलु एषः। परित्रायताम् २अमात्यः।

३ अद्य होलिकानिबन्धन एष बालकोलाहलः।

( ततोऽमात्यो राजभटश्च जटिलं करेङ्गितैः लेखप्रदर्शनैश्च बहु सान्त्वयतः )

नेपथ्ये ( बालकलकलः )

अमात्यः।—( अवलोक्य ) अलं रे बालाः। न वो भयं मुनिपुत्रेभ्योऽपि ? तौ सामवत्सुमेधसौ प्रबलप्रतापयोः प्रसिद्धयोः सारस्वतवेदमित्रयोर्मुनिवरयोः पुत्रौ न तौ कथमपि भवादृशानामवहेलापात्रे। ( राजभटमुद्दिश्य ) गच्छ नगरे एवं पटहमाघोषय यत्,

अरे रे होलिकामदमत्ताः।

वन्द्यान् विप्रानपि मुनिगणान् ब्रह्मचर्य्यान्वितांश्च,
भक्त्यासक्तानथ कुलवधूः पण्डितान् योगिनश्च।
शोकोद्विग्नाननभिलषतो * वाणिजानङ्गनीनान्,
दृष्ट्वा दूरं व्रजत पृथुका राजदण्डोऽन्यथा स्यात्॥ १॥

किञ्च।

हास्यं तदेव रचयेत् परास्यं यत् प्रमोदयेत्।
स हास्यकारी † निर्वास्यो यस्मादेकोपि खिद्यते॥ २॥

राजभ०।—बाढम्। ( इति निष्क्रामति )

अमात्यः ( नेपथ्याभिमुखम् ) अलं रे बसन्तक ब्राह्मणमेनं मा खेदयितुं यतस्व ( जटिलमिङ्गितेन बोधयन् सह तेन निष्क्रामति )

§ ( प्रवेशकः )

---

* वणिगेव वाणिजः स्वार्थे अण्।

† राज्यात् निर्वास्य इति यावत्॥

§ भरतः "प्राकृतभाषाचारः प्रवेशको नाम विज्ञेयः।"

( ततः प्रविशति पटीक्षेपेण चत्वरस्थः माञ्जिष्ठोदक-
पात्रजलयन्त्रसहितः झर्झरहस्तो वसन्तकः )

वस० ।—१ होलिआगीदिं गाइस्सं दाव ( स झर्झवारं गायति. )
होलिओच्छवो सोहइ । जुअजणहिअअं मोहइ ॥ हो० ॥
केसरकुसुमपरागपड़लपरिपूरिदमञ्जुलकुञ्जओ ।
कुङ्कुमपुञ्जपिञ्जरिदणअरो रञ्जिदमहुअरगुञ्जओ ॥ हो० ॥
हिण्डइ कोवि डिण्डिमं गेण्हिअ कोवि अलावइ गीदिआ ।
उच्छालेदि कोवि मञ्जिट्ठं कीलइ कदुअ सुरीदिआ ॥ हो.
लविदुं किं वि लम्बिदो कण्णे चुम्बदि जुवइ कवोलअं ।
कोवि हसन्तो आअच्छन्तो कस्सदि विमलनिचोलअं ॥ हो०
मद्दइ मोदसुहो महुरं उण कोवि मुहे पिट्ठादअं ।
धावइ कुद्दइ गावइ णच्चइ कोवि करइ सुरणादअं । हो० ।
( परितो विलोक्य जलयन्त्रं शनैर्माञ्जिष्ठरसेनापूर्य शनैः )
२ एसो आअच्छदि सामवं सुमेधा वि मुणिपुत्ता क्खु एदे ।
आअच्छन्तु इदो दाव सज्जो म्हि ।

---

१ होलिकागीतिं गास्यामि तावत् । ...... । होलिकोत्सवः शोभते । युवजनहृदयं मोहयति । केसरकुसुमपरागपटलपरिपूरितमञ्जुलकुञ्जकः कुङ्कुमपुञ्जपिञ्जरितनगरो रञ्जितमधुकरगुञ्जकः । हिण्डति कोऽपि डिण्डिमं गृहीत्वा कोऽपि आलपति गीतिकाः । उच्छालयति कोऽपि माञ्जिष्ठं क्रीड़ति कृत्वा सुरीतिकाः ॥ लपितुं किमऽपि लम्बितः कर्णे चुम्बति युवतिकपोलकम् ॥ कोपिहसन्नागच्छन् कर्षति विमलनिचोलकम् ॥ मर्दति मोदसुखो मधुरं पुनः कोपि मुखे पिष्टातकम् । धावति कूर्दते गायति नृत्यति कोपि करोति स्वरनादकम् ॥

२ एष आगच्छति सामवान् सुमेधा अपि मुनिपुत्रौ खल्विमौ । आगच्छताम् इतस्तावत् सज्जोऽस्मि ।

(प्रविश्य राजभटः) १ सतक्कं भो सतक्कं मुणिपुत्ता ऐदे वन्दणीआ ण हसणीया ।

वसन्तकः ।—( विलोक्य ) २ रिच्छ तुम्रं तु मुणिपुत्तो णासि ? ता गेण्ह दाव ( इति तमेव माञ्जिष्ठोदकेनास्नाप्य ) होलिआ भो होलिआ. ।

राज० ।—( तं बद्धा निष्क्रामति )

( ततः प्रविशतो मार्गे गमनं नाटयन्तौ सामवसुमेधसौ )

सुमे० ।—( नेपथ्याभिमुखमवलोक्य ) क्व परिभ्रष्टोसि भो देवशर्मन् ?

नेप० ।—( आगामिदेवशर्मस्वरेण ) एष आगच्छामि ।

देव० ।—( प्रविश्य ) अप्यऽवलोकितो होलिकोत्सवसम्भारोस्मन्नगरे ? तथा हि,

* सिन्दूरस्य घनाघनैरिव घनैर्व्याप्ताः समस्ता दिशः,
काश्मीरोदकसेचनैररुणिता मार्गा गृहा भित्तिकाः ।
किञ्जल्कैरिव भान्ति लिप्तवपुषः सार्द्राम्बरा नागराः,
भेरीझर्झरडिण्डिमाहतिपरा गायन्ति गीतीरिमे ॥ ४ ॥

१ सतर्कं भोः सतर्कं मुनिपुत्रावेतौ वन्दनीयौ न हसनीयौ ।

२ ऋच्छ त्वं तु मुनिपुत्रो नाऽसि तद् गृहाण तावद्···होलिका भो होलिका ।

* सिन्दूरस्येति—सिन्दूरस्य कुंकुमविशेषस्य ( भाषायाम् अबीर इति ख्यातस्य ) घनैः निविडैः घनाघनैः मेघैः समस्तादिशः व्याप्ता इव । काश्मीरोदकसेचनैः केसरजलाभ्युत्रणैः मार्गा गृहा भित्तिकाश्च अरुणिता जाताः । नागरा नगरनिवासिनः सार्द्राम्बरा जलाविलवस्त्रवेष्टिताः किंजल्कैः केसरैः लिप्तवपुष इव भान्ति । भेरीझर्झरडिण्डिमाद्या वाद्यविशेषास्तदाहतिपरास्तद्वादनपरा इमे गीतीर्गायन्ति ॥ ४ ॥

साम०।— पुरोहित सत्यं दृष्टमेवास्माभिः,

किन्तु,

एकः कोपयतीव गात्रिकथनैरन्यो जलासेचनैः,
कश्चित् कुङ्कुममर्दनैः करतलध्वानैश्च हासैः परः।
साऽहम्पूर्विकमेकतः कतिपयाश्चूर्णं क्षिपन्त्यत्रकं,
पान्थानां विदधाति बालकगणो नूनं परां दुर्दशाम्॥ ५॥

सुमे०—मन्ये असमये समायाता वयं राजानं साक्षात्कर्त्तुम्। भयं-नाटयति)

देव०।—किमिति भीत इवासि?

सुमे०।— कथं न,

आधिपत्यमदैर्मत्तो राजैव भयकारणम्।
तत्रापि मदकान्तोऽयं कस्य नैव भयप्रदः॥ ६॥

देव०।—अहो मास्म शङ्किष्ठा दुर्नयमस्मन्महाराजात्।

सोऽयं महाराजः,

यस्य हि सुयशो हंसो वैरिवधूवदनपुटसंस्थम्।
पीत्वा तु हास्य दुग्धं तत्याज तदश्रुजलनिचयम्॥ ७॥

किञ्च,

वैरिवधूमुखभूषणमौक्तिकभक्षणकृतक्षणो राज्ञः।
स जयति सुयशोहंसो रुचिरगतिर्नित्योल्लासी॥ ८॥

साम०।—सत्यं वयमपि प्रसिद्धिमत्रत्यामवगच्छामो यत्,

* यशो न सान्तं न नृपोऽप्यदन्तः,
ख्यातो पृथुदन्तोऽस्ति न चापवादः।

* व्याकरणे तु 'यशस्' शब्दः सान्तः सकारान्तो दृष्टः। अत्र तु यशः सान्तं नास्ति अनन्तमिति यावत्, व्याकरणे ख्यातशब्द उदन्तो

भूमिः सवृद्धिः सगुणोथ राजा,ऽ—
सतत्राऽखिलं व्याकरणैर्विरुद्धम् ॥ ९ ॥

तथापि,

देवशर्मा ।— तथापि किम्. ?

साम० ।—तथापि वयं तु महाराजं सदा वर्णयिष्यामः यदा तस्य नयविनयादीन् साचात्करिष्यामः ।

यतः,

स्वल्पैरपि गुणै राज्ञां जायते सुमहद् यशः ।
मध्यमीपद्विकाशेऽपि रसालमुकुलं यथा ॥ १० ॥

( सर्वे परिक्रामयन्ति )

नेप० ।— ( दुन्दुभि सहकारेण पणववादनम्. )

सुमे० ।—अथ कतमस्मिन् वर्त्मिहे वर्त्मनि. ।

देव० ।—अधुना वयमतिक्रम्य विपणि * शृङ्गाटकानि राज † प्रासादसमीपमाऽऽयाताः [ अङ्गुल्यानिर्दिश्य ] राजद्वारमेतत् ।

---

नास्ति अत्र तु उदन्तः ख्यातः अर्थात् राजमहत्त्ववृत्तान्तः सर्वत्रप्रसिद्धोस्ति 'वार्त्ता प्रवृत्तिर्वृत्तान्त उदन्तः स्यादथाह्वयः' इत्यमरः । व्याकरणे तु वह्वपवादशास्त्रमवलोक्यते तस्यैव च परनित्यान्तरङ्गेभ्यो बलिष्ठताऽपि दृष्टा ( परनित्यान्तरङ्गापवादानामुत्तरोत्तरं वलीयः ) परन्तु अत्र अपवादो-निन्दा नास्ति । व्याकरणे भूमिशब्दे वृद्धिर्नास्ति, अत्र तु शस्यादिवृद्धिः । व्याकरणे 'राजा' इत्यस्मिन् गुणो नास्ति अत्र तु सकलगुणयुक्तो राजा । शेषं स्पष्टम् ॥ ९ ॥

* शृङ्गाटकम् = चतुष्पथम् । " शृङ्गाटकचतुष्पथे इत्यमरः ।

† देवस्थानं राजस्थानं च प्रासाद इत्युच्यते तथाह अमरः । " हर्म्यादि धनिनां वासः प्रासादो देवभूभुजाम् " इति ।

पश्य,

मरकतमणिपत्राः प्रोल्लसद्वज्रपुष्पा,
ललितफलविलासा मञ्जुमाणिक्यवृन्दैः ।
कनकविटपभङ्गा लम्बिलोलद्विहङ्गा ।
रुचिरचितसदङ्गा भान्ति वृक्षाः कपाटे ॥ ११ ॥

साम० ।—इतश्च पश्य,

द्वारोपरिस्थबहुदुन्दुभिमेघनादं,
श्रुत्वेव नीलमणिमण्डितमञ्जुवेषः ।
सुच्छायपुच्छनिकरो बहुहर्षवर्षा,
नन्दादिवेह जड़तां समगान् मयूरः ॥ १२ ॥

देवशर्मा ।—अथ वामतो गच्छामः ।

( सर्वे तथा नाटयन्ति )

नेपथ्ये ।—( शुकपिकसारिकादीनां मधुरारावाः )

साम० ।—( अवलोक्य हस्तेन निर्दिशन् ) अहो विलोकनीया इतो हर्म्यगवाक्षेषु लम्बमानानाम् अन्तःस्थितशुकपिकचातकचकोरचक्रवाककलरवोन्निद्रितदिगन्तानां कनकपिञ्जराणां* सुषमा सुखमावहन्ती ।

( विलोक्य ) अरे रे शुकादयः

स्वच्छन्दं किल काकाः, क्रीड़न्तः सञ्चरन्ति सरसवने ।
यूयं पिञ्जरपतिता, मधुरगिरामस्ति दोषोऽयम् ॥ १३ ॥

सुमि० ।—हंहो कथमिव मधुरा गिर आक्षिपसि !

---

* "सुषमा परमाशोभा" इत्यमरः ।

तथाहि

* एषा हृदयसमुद्रे मधुरागीरस्ति सत्सुधाकणिका ।
यामुपहारीकुर्वन् पुरुषोत्तममपि वशंवदं कुरुते ॥ १४ ॥

एषां पतगानामिव वा आधिपत्यं पश्य ।

कलितकनकपुञ्जे मञ्जुले पिञ्जरेऽस्मिन्,
सुललितललनाभिर्लालिता उल्लसन्ति ।
मधुरमखिलभोज्यं प्राप्नुवन्ति प्रहृष्टा,
अयमतिमधुराणां भाति वाचां प्रतापः ॥ १५ ॥

देव० ।—न केवलमेतस्मिन्नेव परिसमाप्तो मधुरभाषणस्य महिमा स्मरत वनवंशजातायाः अपि नन्दनन्दनवंश्या लोकोत्तरसुखपरम्पराम् ।

तथा हि

रन्ध्रसम्मुद्रणव्याजैः पादौ संवाह्य वादयन् ।
चोचुम्ब्यते हरिः प्रेम्णा वंशीं मधुरभाषिणीम् ॥ १६ ॥

( रङ्गभूमौ प्रकाशः )

सुमेधाः ।—( अवलोक्य ) अहो पश्य पश्येन्द्रदिशि निस्तन्द्रश्चन्द्र उदेति अहो आरुण्यमस्य ।

मन्ये,

निजसुन्दरीवियुक्ताश्चातकसङ्घा भवन्तु खलु यतयः ।
इति मत्वेव तु विधिना कषायवस्त्रं प्रदत्तमिदम् ॥ १७ ॥

साम० ।—किं वा,

---

* मधुरभाषणैः पुरुषोत्तमो राजाऽपि वशीक्रियते । सुधाकणिकादानेन च समुद्रेण हरिरपि वशे कृत इति बिम्बप्रतिबिम्बभावः ॥ १४ ॥

मामादित्यं मत्वा तद्ग्रहणं वै कुहूदिने स्वष्टम् ।
ग्रसेत न यथा राहुः सूर्यस्वरूपो बभूव चन्द्र इति ॥ १८ ॥

देव० ।— अहो मैवम् ।

* कुमुदिनीं मधुपैः सह सङ्गतां,
समवलोक्य निजां रमणीमिमाम् ।
कलितकोपसुकोकनदच्छवि,-
श्चलकरः समुपैति जवाद् विधुः ॥ १९ ॥

अस्ति च मे कलङ्कशङ्कायामपि मैव कल्पना यत्,

जग्राह भ्रमरानिन्दुः स्वकान्तारससङ्गतान् ।
तदीयश्यामतायुक्तः कलङ्की गीयते परैः ॥ २० ॥

सुमे० ।—मैवं भोः ।

संसारतमसां स्तोमं हन्ति धावन् कलाधरः ।
न तु स्वांङ्के समालग्नं यतो विज्ञाः परार्थिनः ॥ २१ ॥

देव० ।—अहो शोभा चन्द्रस्य, पश्य,

स्वैरं कैरव कोरकान् विदलयन् सिन्धुं समुद्वेलयन्,
स्त्रीयास्तैर्निजसुन्दरीविरहिणां यूनां मनः खेदयन् ।
संसारं किरणैरऽति प्रसरणैर्दुग्धै रिवापूरयन्,
मन्दं मन्दमयं प्रयाति नितरामानन्दकन्दः शशी ॥ २२ ॥

साम० ।—( उभयतो विलोक्य ) अहो इतः सूर्योऽस्तमेति इतश्च

---

* कुमुदुनीमिति —। निजां रमणीमिमां कुमुदिनीं मधुपैर्भ्रमरैः पक्षे मद्यपैः सह सङ्गतां संस्पृक्ताम् समवलोक्य विधुः चलकरः चञ्चलकिरणः पक्षे आन्दोलितहस्तः कलितकोपेनेव कोकनदच्छविः रक्तवर्णः जवात् समुपैति ॥ द्रुतविलम्बितं छन्दः ।

चन्द्र उदेति अहो शोभा दिशोः ।

* प्राच्यवाच्यौ दिशी एते सिन्दूराभ्योक्तते इव ।

होलिकोत्सवमाज्ञाय क्रीड़तः किमिमे अपि ॥ २३ ॥

सुमि० ।—पुरोहित सायंकृत्यस्य महान् कालात्ययो जातः तत् कियद्दूरे सरः ।

नेपथ्ये ।—( वसन्तकस्वरेण ) १ चिट्ठद भो चिट्ठद । ( एते न-शृखन्ति )

देवशर्मा ।—इदं नेदीय एव तत् त्वरितं गम्यताम् ।

( एते एकतोगच्छन्ति अन्यतो वसन्तकः पूर्व्ववेषेण विस्मयमुष्णीषं बध्नन् प्रविशति ।

वसन्तकः ।—२ चिट्ठद भो चिट्ठद जुम्हाणं किदे जेव्व मह ईदिसी दसा जादा चिट्ठद चिट्ठद—होमाण हे !—

गदा जेव्व कवड़बम्हणा ( बिचार्य ) होदु अहं लड्डुएण सवामि जा जुम्हाणं वि प्पकामदुद्दसं करिस्संति । ( परिक्रम्यावलोक्य च ) कहिं बि मुत्तोम्हि एदस्स राअभड़रिच्छस्स

१ तिष्ठत भोः तिष्ठत ।

२ तिष्ठत भोः तिष्ठत, युवयोः कृते एव मम ईदृशी दशा जाता तिष्ठत तिष्ठत—अहो हे—गतावेव कपटब्राह्मणौ······भवतु अहं लड्डुकेन शपामि युवयोरपि प्रकामदुर्दशां करिष्यामीति ।··· ······कथमपि मुक्तोऽस्मि एतस्य राजभटचस्य हस्तात्············ कथं दास्याः पुत्रेण मम अङ्गरचकपटोऽपि भग्नः । भवतु एतेषां राजभटानां सहस्रशो गालोः कथयिष्यामि ।

* दिशी एते, कृते इव, इमे अपि, इत्यत्र " ईदूदेद्दिवचनं प्रगृह्य " मित्यनेन प्रगृह्यसञ्ज्ञा प्रकृतिभावश्च ।

इत्यादौ (स्ववस्त्रमवलोक्य) कधं दासीपुत्तेण मम अङ्गरक्खअपडं विभग्गम्। होदु एदाणं राअभड़हदआणं सहस्ससो गाली कहइस्सम्।

नेपथ्ये।—(नूपुरमृदङ्गादिध्वनिसाहचर्य्येण)

चल कुण्डलयुगलं कुन्तलविलगन्मधुसुमसुगलं मोदकरम्।
सहृदयसुखकरणं शोकनिगरणं चेतोहरणं परमवरम्।
अतिलसितकपोलं चपलनिचोलं चिकुरान्दोलं कलितकलम्*।
†सस्मितमितहसितंपरमविकसितं नृत्यंलसितंकिलसकलम् २४

वसन्तकः।—१ ही ही भो णच्चं—कहिं—(विलोक्य) अस्सिं जेव्व राउज्जाणे—(विचार्य्य) ता को वि णच्चइ का वि वा ?

नेपथ्ये।—(पुनस्तथैव)

सिञ्जन्मञ्जीरं स्मितहतवीरं मोदितधीरं चित्तहरम्।
चलनयनललामं पूरितकामं कटिगतिवामं कान्तिधरम्॥
सङ्गीतसुसङ्गं रणितमृदङ्गं साङ्गंविभङ्गं मोदपरम्।
नृत्यति‡ हरदग्धाजननविदग्धा मधुरा मुग्धा परमवरम्॥२५॥

वसन्तकः।—(सकूर्दनम्) २ मुद्धा मुद्धा ता लहुं जेव्व गच्छेमि (इति गच्छति)

---

१ हीहीभोः नृत्यम्—कुत्र— अस्मिन्नेवराजोद्याने—··· तत् कोऽपि नृत्यति काऽपि वा ?

२ मुग्धा मुग्धा तत् लघु एव गच्छामि।

---

* कलिता कला येन।

† स्मित सहितं मितं हसितं यस्मिन्। बहु हासस्य निषेधात्।

‡ हरदग्धस्य कामस्य आजनने पुनरुत्पादने विदग्धा।

( पटीक्षेपः सनृत्या राजसभा परितश्च परीवारः )

राजा० ।—साधु चारणवर्य साधु—पुनः पठ—

चारणः ।—( सादरम्. सवन्दनं च. ) यदाज्ञाप्यते तत्र भवता ।
( सिंजन्मञ्जीरमित्यादि पुनः पठति )

राजा० ।—साधु साधु. ( क्षणं नृत्यं निपुणमवलोक्य ) चारण, वर्णयन्तामितस्याः मृदङ्गादिनादाः ।

चारणः ।—( वन्दनमुद्रयाङ्गीकृत्य ) ( नर्त्तक्याः सम्मुखीभूय )

धिं धिं धिं तटधिं तधिं तटकधिं ताधीनधिं ताकधिन् ,
तुङ्का तुन्न तटाक भत्ततटतां ताधूमधुं ताकधुम् ।
द्रां द्रां द्रां भ्रकतां तधत्तटकधुं धट्टकधामुच्चरन् ,
भो भो भावकलावति प्रियतमे शस्यो मृदङ्गस्तव ॥ २६ ॥

( सर्वेषु मस्तकमान्दोलयत्सु पुनः )

किञ्च

* शरासीकृतानगोप्येष बद्धा ताद्यः सभासु च ।
मृताङ्गसन्मृदङ्गोपि मृदङ्गः शस्यते जनैः ॥ २७ ॥

( राजमाम्मुख्यं नाटयन् ) श्रीमन्महाराजमाशिषो वदति तालः
तथा हि
अगणितमणिगणधरणकिणस्ते । माणवको गुणिगण्यो भूयात् २८

( क्षणानन्तरम् ) अथ सरङ्गीसङ्गीतमप्यङ्गीकरोतु श्रीमान् ।

इयमेतस्योक्तिर्यत्,

‡ चिञ्चाकर्माचामति चानने स्वे ,

---

* मृताङ्ग चर्म । शेषं स्पष्टम् ।

‡ सरङ्गीध्वनिमनुकृत्याह चिञ्चेति । चिञ्चा अम्लिका । पम्पासरोविशेषः । नायिकाङ्का स्त्रीधिन्द्युतां शेषं स्पष्टम् ।

यम्यातटं पातुमऽथो प्रयाति ।
रिपुस्त्वदीयः किल नायिकाङ्कां ,
कां कां दशां नैव जगाम नाम ॥ २८ ॥

( मन्दं स्मयमाने राजनि पुनः ) इयं च मंजीरस्वनैर्यत्,
सचणाः चणदायां हि सुविलचणलचणाः ।
अरचणा रुदन्तोऽचणा वर्त्तन्ते रिपवस्तव ॥ ३० ॥

अमात्यः ।—स्वगतम्. अहं तु तर्कयामि यत्,
आरब्धे नृत्यकृत्ये हरिगुणरहिते लम्पटानां समाजे,
धिक्तान् धिक्तान् मृदङ्गः कथयतिसुतरां सम्मुखं श्रावयित्वा ॥
कान् कान् कान् कांश्यतालःप्रतिरणतितरामङ्गहारैश्च बाला ,
सभ्रूभङ्गैरपाङ्गैः, प्रवदति सकलं नूनमेतान् समेतान् ॥ ३१ ॥

भावकलावती ।—( गायतिवसन्तरागेण विहारपरिपाटीमिश्रितेन )
१ बहुमअरन्दपानपरमहुअरभङ्किदलसिदतलाओ ।
पञ्चमणादवादविहितादरकोइलपूरिदराओ ॥
बल्लहविरहिदजुवइजणाणं जीवणदाणदुरन्तो ।
किं वि करेसि कहेहि णेहमहि मस्सिहिमेइ वसन्तो ॥३२॥

नेप० ।—( वसन्तकस्वरेण ) २होही भो । सच्चं एसो आअदो जेव्व-
वसन्तो । ( इति प्रविशति. )

राजा ।—कथं वसन्तकः ?

---

१ बहुमकरन्दपानपरमधुकरझंकृतलसिततड़ागः ।
पञ्चमनादवादविहितादरकोकिलपूरितरागः ॥
बल्लभविरहितयुवतिजनानां जीवनदानदुरन्तः ।
किमिव करोमिकथयस्व हसखिसन्निधिमेतिवसन्तः ॥

२ ...... सतरमेष आगत एव वसन्तः

वसन्तकः ।—१ जअदु जअदु महाराओ ।

राजा ।—वसन्तक साम्प्रतं यावत् कुत्रासीः ?

वस० ।—२ महाराअ । लड्डुअभक्खणं पडिक्खिविअ सुक्खसक्खुलिं विअ भक्खअन्तो इदो तदो भमन्तो आसम् ।

राजा ।—अस्तु किंचिद् वर्णय तावद् भावकलावतीम् ।

वस० ।—३ जं आणवेदि वअस्समहाराओ ।

(इति स्वीकृतया संस्कृतमाश्रितय)

हंसीशोभां कलयति गतौ, शशिवदनेयम् ।

लोलन्मुक्ताप्रबालामलमणिरचितस्रग्धराभाति यस्याः श्रीः ॥३३॥

(सर्वेषु किञ्चित् हसत्सु)

अमात्यः ।—अहो किमिदं छन्दः ?

वस० ।—४ अच्चरिअं ण जाणिदं भअदा एदं विसमं छन्दो जा पडिपदं अण्णं जेव्व होदि ।

अमात्यः ।—अथ प्रतिपदमेषां छन्दसां नाम किं नाम ?

वस० ।—५ अमच्च पडिपदं सुमरिदं जेव्व * ।

अमात्यः ।—(स्वगतम्) महाधूर्त्तः ।

१ जयतु जयतु महाराजः ।

२ महाराज लड्डुकभक्षणं प्रतिक्षिप्य शुष्कशष्कुलीमिव भक्षयन् इतस्ततो भ्रमन्नासम् ।

३ यदाज्ञापयति वयस्यमहाराजः ।

४ आश्चर्यं न ज्ञातं भवता इदं विषमं छन्दः यत् प्रतिपदमन्यदेव भवति ।

५ अमात्य प्रतिपदं स्मृतमेव ।

* हंसी, शशिवदना, स्रग्धरा, श्रीश्च ।

वसन्त०।—( पुनः संस्कृतमाश्रित्य )

कोमलालापकलनःकोविदा कामिनी किल।
विकाध्यपादपाच्छन्नपर्वताभा विभाव्यत॥ ३४॥

राजा।—( सहासम् ) अरे कान्तापर्वतयोः का सङ्गतिः ?

वस०।—१ महाराअ अलङ्कारो एसो असङ्गदी णाम।

( सर्वेषु हसत्सु पुनः संस्कृतमाश्रित्य )

आननं नयनं नेत्रं, कण्ठः केशाः करः कटिः।
रसना रदनाः पादौ, वेणी वाहुर्वचो वयः॥ ३५॥

अमात्यः।—चित्रम् अत्र तु अन्वय एव न प्रतिभाति।

वस०।—२ हीही भो ण जाणेदि भवं अणण्णओ एसो अलङ्कारो ?

नेप०।—(ढक्कावादनपुरस्सरं वंशीनादः)

वस०।—३ आः किं एदं ? ( विचार्य ) आदु सुमरिदं एसो मेहाणं घड़घड़ासद्दो एसो वि कीजआणं धुणी।

अमात्यः।—धिङ् मूर्ख वसन्ते क्व मेघाः राजगेहे वा क्व कीचकाः ?

वस०।—४ आ दुव्वेतण्डिअ अम्हाणं जेव्व पक्खं दूसेसि तुमं किं ण कहेसि णिजं पक्खं ?

अमात्यः।—अरे अर्द्धरात्रसूचकमिदं वाद्यम्. किन्न पश्यसि यत्सं-वृत्तोयं निशीथसमयः।

---

१ महाराज अलङ्कार एषोऽसङ्गतिर्नाम।

२ अहो न जानाति भवान् अनन्वय एषोऽलङ्कारः ?

३ आः किमेतत्!—अथवा स्मृतमेष मेघानां घडघडाशब्दः एषोऽपि कीचकानां ध्वनिः।

४ आः दुर्वैतण्डिक अस्माकमेव पक्षं दूषयसि त्वं किं न कथयसि निजं पक्षम् ?

तथा हि,

पतगकुलकलो न श्रूयते क्वापि देशे ,
नभसि हिमकरोऽयं मध्यदेशं समेति ।
नयनयुगलमेतन्निद्रया सुद्युतेऽज्ञः ,
शिथिलितमथ गात्रं निर्विचेष्टं विभाति ॥ ३६ ॥

राजा।—( परितो विलोक्य ) सत्यं संवृत्तोयं सभाविसर्जनसमयः।

( सर्वे उत्तिष्ठन्ति. )

वस०।—( आशीर्मुद्रया ) १ णित्तं दह्वोदणं भक्खेदु वअस्सो ।
अहं वि णिद्दाविरहिदं लोअणं समस्ससेमि।

राजा।— वयस्य तथा कुरु.

( यथाविहिताचारपुरस्सरं सर्वे गच्छन्ति. )

( जवनिकापातः )

## ( समाप्तो द्वितीयोऽङ्कः )

## तृतीयाङ्कपात्राणि ॥

| | |
|---|---|
| कलिः | बालकाः |
| रक्षकः | सीमन्तिन्याः पुरोहितः |
| वसन्तकः | देवशर्मा |
| भूतादयः | सामवान् |
| सुमेधाः | राजा |
| अमात्यः | भृकुंसकः ससमाजः |

१ नित्यं दध्योदनं भक्षयतु वयस्यः। अहमपि निद्राविरहितं लोचनं समाश्वासयामि ।

# तृतीयोऽङ्कः ।

( जवनिकापसारणं स्थानं नगरप्रान्तः )

( ततः प्रविशति सहर्षं करधृतदण्डः कलिः )

कलिः ।—सम्यक् लब्धावस्थानोऽस्मि मदिराशालासु, वारबालासु-काञ्चननिलयेषु, द्यूतालयेषु, श्रीमदप्रमादेषु, विविधवादेषु चाऽहमिवावतिष्ठे * । कोमलम: यद्राज्यसमारम्भसमये एव परितो बद्धाञ्जलयः कठिनकोपा अमी कामक्रोधादयो वीर-वराः यमनियमादीन् धर्मशर्मदान् जिघत्सन्तः सज्जाः संवृत्ताः; तत्राप्येष वसन्तस्य प्रमादमयः समयः तत्रापि च होलिकाक-लकलेनाऽहं तरङ्गित इवास्मि । अहो धार्मिकजनधर्मकर्मम-र्माहतमाहशजनजीवनजीवातुरेवैष समयः । सम्प्रत्येवं प्रमा-दमदमत्तो जनः । यत्

मृदुलादरपरिवर्त्त,हास्येष्वपि दुर्दशाऽत्र सा क्रियते ।

कोपान्धीकृतनयनाः, कलहेष्वपि यां न कुर्वन्ति ॥ १ ॥

( आकाशे दृष्टिं बद्ध्वा ) अरे रे धर्म तिष्ठ त्वाम ऽधुनैवानेन कृ-पाकृपणेन कृपाणेन खण्डशः करोमि ( आकाशभाषितमिवा-नुश्रुत्य ) "अरे मूढ़ किं कथयसि किमधुनैव माद्यसि अधुना तु ते राज्यारम्भोपि न जात" इति । रे रे मूर्ख—

नन्दनन्दनलीलाभिर्यदा विरहिता मही ।

कले राज्यमिदं प्राज्यं तदारभ्य विजृम्भते ॥ २ ॥

---

* " समवप्रविभ्यः स्थः " इत्यात्मने पदम् ।

( पुनराकर्णनं विनाट्य ) शठ किं कथयसि " अलं गर्वेण नाधुनाऽपि आनन्दमुद्रां नाटयन् लज्जसे " ।

शृणु,

वेदच्छेदकृतादरैर्बहुतरैः पाखण्डिभिः खण्डितो ।
ब्रह्मव्याजविभिन्नवेदविधिभिर्धूर्त्तैश्च संकर्त्तितः ॥
म्लेच्छैरैच्छिककार्यमात्रघटनैरामूलमुच्छेदितो ।
यातो मूढ़रसातलं नहि कलौ त्वाट्टच आननदति ॥ ३ ॥

पश्चाद्द्यैव मदीयां दुर्घटनाम् । अद्य हि बालकगणसगालिभाषणकलकलश्रवणजातसंस्कारभारस्फारै रावैः पतत्रिणोऽपि दिगन्तं दन्तुरयन्ति, प्रजागरविशिथिलकरतलाहन्यमानमृदुमृदङ्गसङ्गिसङ्गीतैस्सुन्दर्यः पुराणि पूरयन्ति,। समास्वादितासवसुवासितश्वासप्रश्वासैः चुम्बनोदञ्चितनवयुवका युवतीनां नासामणीन् मलिनयन्ति. ।

( परितोऽवलोक्य ) अद्य हि,

मद्योन्मादितमण्डलेषु मुदितो हास्येषु हासान्वितो ,
लीलालोलविलासिनीविलसितैरत्यन्तमुल्लासितः ।
द्यूतद्योतितवैद्युतद्युतियुतो वादप्रसादोदितः ,
प्रोन्निद्रः किल कोपनैः कलकलैः कालः कलिः क्रीड़ति ॥४

( परिक्रम्य विचार्य च ) एतैर्मुनिमण्डलैरहं चिराय खेदितोऽस्मि, कथमेतान् ग्लापयामि ? ( गम्भीरं विचार्य. ) अथवा स्मृतं, सामवल्लमेधसाविमौ राजदर्शनार्थं समायातौ ( सहास्यम्. ) अहो सम्यक् समये समायातौ, तत्तावद् राजानं प्रथममेव वसन्तोत्सवप्रमादवशंवदं करोमि. तद्द्वारैव च एनयोः सम्यक् सत्कारं कारयिष्यामि तत् त्वरितं तत्रैव गच्छामि. ।

( गच्छन् )

भो भोः—

बालाः कलयत गालीः, यौवनयुक्ताः सभाजयत युवतीः ।
यूयमऽपि पुनर्वृद्धाः, जीर्णामुद्धरत निजतृष्णाम् ॥ ५ ॥
( इति गच्छति. )

* ( विष्कम्भकः )

## ( पटीक्षेपः स्थानं नगरवीथी )

( बहवो बालकाः सोपद्रवं क्रीडन्ति. )

( ततः प्रविशति दण्डहस्तः सीमन्तिन्याउद्यानद्वाररक्षकः)

रक्षकः ।—( निर्भर्त्स्य ) १ मूढाः किं ण प्पेक्खध एदं महाराअचन्दंगदस्स पट्टरणीए सीमन्तिणीए पुजोज्जाणं त्ति ? पलाअध पलाअध । बालकाः तद्दण्डादिकदर्शनभीताः पलायन्ते. )

नेपथ्ये ।—( आगामिपुरोहितस्वरेण )

घण्टन्यड्न्यसङ्घस्खलतु च लसिते ध्वस्तविध्वान्तवर्गे ,
हल्याघल्या समेतो रविकररुचिरे कर्षकः क्षेत्रमध्ये ।

---

१ मूढाः किं न प्रेक्षध्वे । इदं महाराजचन्द्राऽङ्गदस्य पट्टराज्ञ्याः पुजोद्यानमिति ? पलायध्वे पलायध्वे । कुत आगच्छति पुरोहितमिश्रः ! आर्य इतोऽस्मि इत इतः ।

---

* द० रू० " वृत्तवर्त्तिष्यमाणानांकथांशनांनिदर्शकः । संक्षेपार्थस्तुविष्कम्भोमध्यपात्रप्रयोजितः " इति । अतीतानां भाविनां च कथावयवानां ज्ञापको मध्यमेन मध्यमाभ्यां वा पात्राभ्यां प्रयोजितो विष्कम्भक इति । स द्विविधः शुद्धः सङ्कीर्णश्चेत्याह " एकानेककृतः शुद्धः सङ्कीर्णो नीचमध्यमैः" अत्र तु एककृतत्वात् शुद्धो विष्कम्भकः ॥

विप्रा यज्ञादिकर्माश्रितकृतिनिपुणाः स्वीयकर्माचरन्तु ,
सूर्यः सूर्यर्चितोयं त्रिदशपतिदिशं भाभिराभिर्वृणोति ॥ ६ ॥

अहो इतः सूर्यं उदेति ततश्च चन्द्रोऽस्तमेति तन्मन्ये ,
रात्रौ चन्द्रेण भुक्ताममरपतिदिशं वीक्ष्य भानुः स्वकीयां ,
क्रोधादारुण्ययुक्तस्तरणिरपि करं कैरविण्यां चकार ।
दृष्ट्वा तं चैव चन्द्रः कमलविहसितः खेदपाण्डूकृताङ्गो ,
मन्ये पीत्वा विषं वै गिरिषु निपतितो लाञ्छनस्य च्छलेन ॥ ७

प्रणमामि भगवन्तम् भास्वन्तम् ।

निशाव्यालीग्रस्तं जगति सकलं जीवनिचयं ,
चिरं मूर्छामाप्तं स्मृतिविरहितं स्वापकपटात् ।
विना त्वां को भास्वन्नमृतरसपूर्णैरिवकरै ,
विदध्यादुल्लाघं विदितबहुलाघं जनमपि ॥ ८ ॥

रक्षकः ।—( नेपथ्याभिमुखमवलोक्य स्वगतम् ) कुदो आअच्छदि पुरोहिदमिस्सो ? ( प्रकटम् ) अज्ज इदोम्हि इदो इदो ।

( ततः प्रविशति कुशपाणिः सीमन्तिन्याः पुरोहितः )

पुरोहितः ।—रक्षक अपि सतर्कोसि स्वकार्ये ?

रक्षकः ।—१ अज्ज एत्थ वि प्पुट्ठव्वं ?

पुरो० ।—तत् किं द्वारं परित्यज्य दूरमागतोऽसि ?

रक्ष० ।—२ अज्ज वालकोलाहलं सामइदुं ।

पुरो० ।—तत्किमीदृश्यामरुणोदयवेलायामपि वालकोलाहलः !

रक्ष० ।—३ अज्ज होलिअोत्तरप्पडिपद त्ति ।

पुरो० ।—( विचार्य ) अथ स्मृतम् । परमितः सतर्को भव अद्य तत्र भवती भगवतः परमपुरुषस्य दोलोत्सवसम्भारे व्यापृतास्ति तद्

१ आर्य अत्राऽपि प्रष्टव्यम् ।
२ आर्य वालकोलाहलं शामयितुम् ।
३ अद्य होलिकोत्तर प्रतिपदेति ।

यद्यपि अद्य साधारख्येन सर्वैरपि पूजागृहं प्रविश्य मञ्जुगुञ्जद्ऽलिपुञ्जकुञ्जे मालत्यादिविविधकुसुमपटलाग्रलोलमकरन्दविन्दुव्रजविहितमौक्तिकनिकरविभ्रमां लोलां दोलामधिरूढम् प्रह्लादितप्रह्लादं, ध्रुवीकृतध्रुवं, नन्दितनन्दं, सोद्धवीकृतोद्धवं च कञ्चित् प्रणतपालं, तुलसिमालं, गोपालबालं साक्षात्कृत्य स्वकीये नयने सफलयितुं शक्ये तथापि अवधेहि यत्.

* येऽहङ्कारपरायणा हरिहरद्वेषेषु बद्धादरा,
ये मर्म्माविदयोक्तिरन्ति वचनं भक्त्यापि शून्याश्च ये।
व्यासोक्तेर्नहि मर्म यैः परिचितं धर्मस्य नो धूर्वहा,
ते दुष्टाग्रहविग्रहग्रहहता नायान्तु पूजागृहम्॥ ९॥

रत्न०।—जं अज्जो आणवेदि।

पुरो०।—अपरं च खल्लु एष चन्द्रवासरोऽस्ति तत्, मरकतकृतकर्णपूरविड़म्बकचञ्चलकानिर्माल्यविल्वपत्रपरिशोभितकर्णकपोला, चंद्रशेखरध्यानस्थिरीकृतनिष्कम्पपक्ष्मपङ्क्तिसंयमितलोचनयुगलविजितार्द्धोन्निद्रनीलकमला, पार्वतीपादपङ्कजपरागायमाणकुङ्कुमाङ्कितमेचककुञ्चितकचप्रचयविरचितसायन्तनघनाड़म्बरविभ्रमा, कोमलस्थलकमलदलकान्तिभ्रान्तिसम्पादकपादविन्यासविरचितविविधप्रदक्षिणा, दत्तदीर्घदक्षिणा, दक्षिणानायोपहासदक्षिणा, वामापि दक्षिणा, दक्षिणापि कलितालका, कलितालकापि च नयक्षमोदितयशाः श्रीमती तत्र भवती सीमन्तिनी पार्वतीपरमेश्वरौ प्रपूज्य बहून् द्विजदम्पतिसमुदायान् सादरं भोजयिष्यति तत् सुयोग्यानां सपत्नीकानां द्विजानां त्वं ज्ञातानामज्ञातानामऽपि च निषेधं मा स्म कार्षीः।

---

* व्यासोक्ते रित्यनेन ग्रन्थकारोक्तिरपि ध्वन्यते। दुष्टाग्रहो दुराग्रहः, तत्प्रयुक्तस्य विग्रहस्य ग्रहेण ग्रहणेन हताः विनष्टाः॥

रच० ।—१ बट्ठम् । ( इति गच्छति )

पुरो० ।—( स्वगतम् ) मया तु स्मरणमात्रेणैव सीमन्तिनीवर्णन-
व्यासक्तेन चिरं विलम्बितं तद् यावद् गच्छामि ।

( ततः प्रविशत्यकस्माद् वसन्तकः )

वस० ।—२ भो भो पुरोहिद चिट्ठ चिट्ठ ।

पुरो० ।—( गच्छन् पराहृत्य ) कथ्यताम् ।

वस० ।—३ णं णमोदे ।

पुरो० ।—नमस्करोमि । ( इति परिचिकीषयेव पश्यति. )

वस० ।—४ अवि कुसली पुरोहिदो ?

पुरो० ।—कुशली, किन्तु क्षम्यतां नाहं परिचिनोमि भवन्तम् ।

वस० ।—५ अध णस्सं गेण्हीअदु दाव उण परिचओ वि भवि-
स्सिदि ? ( इति नस्य विल्वं निवेदयति )

पुरो० ।—आः, अलं, क्षम्यतां नास्ति मेऽस्मिन्नभ्यासः ।

वस० ।—६ गेण्हीअदु गेण्हीअदु किं वि गेण्हीअदु ।

पुरो० ।—अलं मिथ्यागमाग्रहेण, न क्षमे ।

वस० ।—( सहो-ह्रो-कारं तेन सह परिक्रामति )

पुरो० ।—( स्वगतम्. ) एष कोपि धूर्त इवावलक्ष्यते, मम एतेन
सह परिचयोऽपि नास्ति अयं तु नस्यादिदानेनाऽऽत्मानं चिर-
परिचितमिव प्रकटयति ।

---

१ बाढम् ।

२ भो भोः पुरोहित तिष्ठ तिष्ठ ।

३ ननु नमस्ते ।

४ अपि कुशली पुरोहितः

५ अथ नस्यं गृह्यतां तावत् पुनः परिचयोऽपि भविष्यति. (…)

६ गृह्यतां गृह्यतां किमपि गृह्यताम् ।

( प्रकटम् ) मित्राणां वृत्तान्तं शुश्रूषे. ।

वस० ।—१ इदो वि ण परिचिणोदि मं पुरोहिदो ?

पुरो० ।—न ।

वस० ।—२ भो जह भवं तत्थ भोदीए सीमन्तिणीए पुरोहिदो तह अहं तत्थ भवदो विदब्भराअस्स ।

पुरो० ।—आः तत् किं भवतोऽभिधानं देवशर्मेति ?

वस० ।—३ मह अग्गजस्स ।

पुरो० ।—स्यादेवं तदाऽऽज्ञाप्यतां किञ्चित् ।

वस० ।—४ किं आणवेमि कहीअदु कस्सिं समए अम्हेहिं भोअणत्थं आगमणीअं त्ति. ।

पुरो० ।—तत्किं भवानऽपि भोजनार्थमायास्यति ?

वस० ।—५ ता किं मह सुहं णत्थि अहं बम्हणो वा णम्हि ?

पुरो० ।—अहो किं तु राजपुरोहित इति प्रतिष्ठितोसि ।

वस० ।—६ आ ' पड़िट्ठा सूअरी बिट्ठा ' ।

पुरो० ।—( स्वगतम्. ) मन्ये नायं पुरोहितः धूर्तब्राह्मण एषः ( प्रकटम्. ) अथ समायास्यति भवान् सपत्नीकः ?

१ इतोऽपि न परिचिनोति मां पुरोहितः ।

२ भो यथा भवांस्तत्र भवत्याः सीमन्तिन्याः पुरोहितः तथाऽहं तत्र भवतो विदर्भराजस्य ।

३ ममाग्रजस्य ।

४ किम् आज्ञापयामि । कथ्यतां कस्मिन् समये अस्माभिर्भोजनार्थमागमनीयमिति ।

५ तत्किं मम सुखं नास्ति ? अहं ब्राह्मणो वा नाऽस्मि ?

६ आः " प्रतिष्ठा शूकरी विष्ठा " ।

बस० ।—१ हंहो देहे जेव्व दक्खिणं पुरुसो वामं इत्थिअ त्ति पसिद्धम्। ता दुम्हेहिं वि हत्थेहिं भक्खिस्सं।

पुरो० ।—धूर्त्त हससि ?

बस० ।—२ तुमं धुत्तो तुअ घरणी धुत्ता ।

पुरो० ।—अथ मम बहूनि कार्याणि सन्ति साधयामि तावत्। ( इति गच्छति )

बस० ।—३ खणं चिट्ठ, खणं चिट्ठ, एदं बीड़िअं गेण्हिअ गमिस्ससि।

नेपथ्ये ।—( पुरोहितस्वरेण ) अरे रे निर्लज्ज धिक् ते ब्राह्मणत्वम्।

तथा हि ।

परान्नमात्रलाभार्थं पाण्डित्यं यस्य जृम्भते।
तेजो हि भुङ्क्ते स स्वीयं मित्रैरपि विमानितः ॥ १० ॥

किंच ।

यज्ञोपवीतं बिभ्राणाः पठन्तो वैदिकीमृचम्।
वदन्तो देहि देहीति ब्राह्मण्यं लज्जयन्ति ते ॥ ११ ॥

बस० ।—४ गच्छ रे गच्छ पड़िट्ठिदब्बम्हण, अहं वि तुह हिदं

---

१ हंहो देहे एव दक्षिणं पुरुषो वामं स्त्रीति प्रसिद्धम्। तत् द्वाभ्यामऽपि हस्ताभ्यां भक्षयिष्यामि।

२ त्वं धूर्त्तस्तव गृहिणी धर्त्ता।

३ क्षणं तिष्ठ, क्षणं तिष्ठ, इमां बीटिकां गृहीत्वा गमिष्यसि।

४ गच्छ रे गच्छ प्रतिष्ठितब्राह्मण, अहमपि तव हितं कदापि न करिष्यामि ( ··· ) ततः सामवस्तु मेधसोः किमपि अहितं करणीयं ययोः कृते अहं राजभटेन बहुस्ताड़ितोपि, इतश्च एतस्य दुष्टपुरोहितस्य यो मामेवं धिक् करोति। तत् किमपि एकमेव ईदृशं कार्यं

कदावि ण करिस्सं (परिक्रम्यावलोक्य च) तदो सामवन्त सुमेधसाणं किं वि अहिदं करणिज्जं जाणं किदे अहं राजभडेण बद्धो ताडिदो वि, इदो अ एदस्स दुट्ठपुरोहिदस्स जो मं एवं धिक्करीदि । ता किं वि एक्कं जेव्व ईदिसं कज्जं करिस्सं जेण दुस्सं वि पुण्णसक्कारो भविस्सिदि । (परिक्रम्यावलोक्य च) कहिं अहं एत्थ जेव्व ट्ठिदोम्हि, अज्ज राअसभम्हि खण्डभण्डो कीलिस्सदि ता तहिं जेव्व गच्छम्हि । (नेपथ्याभिमुखमवलोक्य) कुदो एसो इदो जेव्व आअच्छदि राअपुरोहिदो देवसम्मा।

(ततः प्रविशति स्नात्वा तड़ागात् परावर्तमान इव देवशर्मा)

बसन्त० ।—१ कहिं वि एवं सिग्घंसिग्घं गच्छेदि राअपुरोहिदो ।

देव० ।—वसन्तकमिश्र अद्य वार्षिक योगिनीपूजासहोत्सवदिन-मिति समारब्धानि राजसभायां नृत्यसङ्गीतादीनि तत्रैव च सामवत्सुमेधसावपि श्रीमता आकारितौ तत्तौ नीत्वा तत्रैव गच्छामि विलम्बितं च मया स्नानजपाद्यासक्तेनेति शीघ्रता ।

बस० ।—२ आणेदु आणेदु अज्जो ।

देव० ।—आं साधयामि । (इति निष्क्रान्तः)

बस० ।—(स्वगतम्) ३ मएवि सिग्घं तहिं जेव्व गन्तव्वं, सामवन्त-

करिष्यामि येन द्वयोरपि पूर्णसत्कारो भविष्यति (… … … …) कथमहमत्रैव स्थितोस्मि, अद्य राजसभायां खण्डभण्डः क्रीड़िष्यति तत् तत्रैव गच्छामि (… ……) कुतएष इत एव आगच्छति राज-पुरोहितो देवशर्मा ।

१ कथमिव एवं शीघ्रं शीघ्रं गच्छति राजपुरोहितः ।

२ आनयतु आनयत्वार्यः ।

३ मयापि शीघ्रं तत्रैव गन्तव्यं सामवत्सुमेधसोश्च तत्रागतयोः कुतोऽपि राजकोपः कारणीयः । अथवा तत्रैव प्रेक्षिष्ये किं स्फुरति इति ।

सुमेधाणं अ तह्म आगदाणं कुदोवि राअकोवो कारणिज्जो । अधवा तहिं जेव्व पेक्खिस्सं किं फुरदि त्ति ।

नेपथ्ये ।—( सवेदध्वनि. )

भूताः प्रेताः पिशाचाश्च , अपक्रामन्तु सत्वरम् ।
सीमन्तिन्यावासगृहात् , धर्मकर्मसमायुतात् ॥ १२ ॥

( ततः प्रविशन्ति शिवानादसहकोलाहलकराः भूतप्रेतादयः )

( वसन्तकः तान् वीक्ष्य भयादितस्ततः पलायते )

( तेषु परस्परं विलक्षणभाषयेव बहुकलकलं कुर्वत्सु )

वस० ।—१ ( कोणैकदेशे समाच्छन्नः शनैः स्वगतम्. ) किमेदे आलवंदि, ( आकर्णनं नाटयन् ) हंहो मन्तंदि एदे जा सीमन्तिणीए आवासे दु णत्थि णो गदी ता महुमत्तं राअउलं जेव्व पविसेम्ह । हद्धी हद्धी राअसभं जेव्व गच्छेमि दाव । ( इति तूष्णीमाच्छन्नः पलायते. ) ( तेऽपि राजसभास्थानं निर्दिशन्त इवाङ्गुल्या कलकलोत्तरं यान्ति. )

( पटीक्षेपः प्रविशन्ति च गमनं नाटयन्तो देवशर्मसामवसुमेधसः )

देव० ।—अपि दृष्टमाश्चर्यनिकेतनं महाराजस्य ।

सुमे० ।—अहो दृष्टमाश्चर्यनिकेतम् ।

यत् ।

मकरन्दपानलालसमधुकरशतवदनभञ्जनैर्लोलैः ।
परिलसितं किल विमलैः, सततविकसितैस्तु कृत्रिमैः कमलैः॥१३॥

साम० ।—अपि तत्स्थानं स्मरसि ।

१ किमेते आलपन्ति—हंहो मन्त्रयन्ति एते यत् सीमन्तिन्या आवासे तु नास्ति नो गतिस्तन्मधुमत्तं राजकुलमेव प्रविशामः । हा धिक् हा धिक् राजसभामेव गच्छामि तावत् ।

सङ्कोचयति तरलयति, विस्तारयति प्रफुल्लयति ।
निजपक्षौ कूजन्तौ, पञ्जरगा यत्र कृत्रिमा चटका ॥ १४ ॥

देव० ।—अथ तस्य मुकुरभवनस्य शोभा केन कथनीया नाम ।

यत्र ।

* सर्वतः पतितैः स्वीयैः प्रतिबिम्बैर्भवत्युत ।
'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' ॥ १५ ॥

साम० ।—सत्यम् । ( इति सर्वे परिक्रामन्ति )

देव० ।—अहो आगता एव वयं मेघगर्ज्जनायितदुन्दुभिनादनर्तितनीलकण्ठनिवहं द्वितीयं राजोद्यानद्वारं तत् प्रविशामः ।

सुमे० ।—( विलोक्य ) आ एवं किल, पश्य.

सतर्कनेत्रैः सुगृहीतवेत्रैः सुमञ्जुवेशैः परिवृत्तकेशैः ।
युतं प्रतीहारगणैरजस्रं द्वारं द्वितीयं वयमागताः स्मः ॥१६॥

( इति सर्वे प्रवेशं नाटयन्ति. )

देव० ।—इतः पश्य कमलकुमुदिनीमोदितालिकुलालिझङ्कृताम्, रजनीकरकरनिकरस्पृष्टसोपानोपान्तजटितचन्द्रकान्तप्रचयप्रकटितवरवारिविरीचिताम्, विसप्रसूनप्रचयपरिपतितपीतपरागपटलपरिपूरिताम्, सरससारसरसितलसिताम्, सरसीम्. ॥

सुमे० ।—सत्यमत्र,

† उद्यच्चन्द्रकरप्रभावविलुलत्सान्द्रकान्तैर्जलैः,
कान्त्या मर्दितमानसैः स्फटिकसोपानालिमध्यं गतैः ।
हंसाली कलकूजिताञ्चितगतिर्मत्वा सुधांशोः सुधां ,

* अत्र श्लोकार्द्धसमस्यापूर्तिरपि श्रव्या ।

† चन्द्रकरस्पर्शेन चन्द्रकान्तमणिर्जलं चरतीति प्रसिद्धम् । तद्धि चन्द्रकरसंयोगादत्यन्तशैत्योदयाद् वायुगतसकलजलकणाकर्षणात् तदखिलसङ्कलनमूलकजलप्रवाहघटनात् च सम्भवीति ।

तृप्यत्युन्मुकुलातिमुक्तनिपतत्पुष्पालिमुक्ताफलैः ॥ १५ ॥

साम० ।—अहो अस्यां कक्षायाम् उद्यानशोभा अतितरां चकास्ति ।

सुमे० ।—सत्यं किं न पश्यसि इतो बालाशोकावलीम् ।

इह सम्प्रति ।

* ललनाचरणाहतिस्खलन्मणिमञ्जीरकमौक्तिकावृताः ।
सदलक्तकरागरञ्जिता, विलसन्तः सदशोकपादपाः ॥ १६ ॥

देव० ।—( परिक्रम्यावलोक्य च )

† अहो आगता वयं तृतीयं राजोद्यानद्वारम् ।

सुमे० ।—( विलोक्य ) अहो शोभाऽस्य द्वारस्य मन्ये विश्वकर्मणा स्वमखिलं चातुर्यमस्मिन्नेव ‡ लापितम् ।

देव० ।—अये किं न पश्यसि अस्य भित्तिशोभाम् ।

तथा हि ।

§ मरकतकृतकण्ठाः पद्मरागाढ्यपक्षा,
रजतलसदऽपाङ्गा नीलताराङ्कपुच्छाः ।
पवनतरलमुक्तामालिकाचञ्चुशोभाः,
हृदयहरणशूरा भान्ति भित्तौ मयूराः ॥ १७ ॥

अपि च इह हि ।

रजतारचिताः सुचञ्चवोऽमलमाणिक्यसुलोचनच्छटाः ।
विलसन्ति निजप्रियायुता, वलभीस्था हि कपोतपोतकाः ॥१८॥

सुमे० ।—अहो द्वारदेशत एव विलोक्यते शोभालोभावहा महाराजसभा

साम० ।—( अङ्गुल्या निर्दिश्य ) पश्य पश्य कलितललिततारकमण्ड-

---

* पदाघातादशोको विकसति इति कविसम्प्रदायः ।

† पटीक्षेपेणैतद् द्वारं दर्शयितुं शक्यम् ।

‡ ली-धातोर्णिचि ।

§ इयं मालिनी वृत्तिः ।

लमण्डितमाकाशमिव संकोच्य स्थापितं वितानम् संशोभन्तेऽच सुवर्णशृङ्खलावलम्बिताः पद्मरागवैदूर्यमरकतमाणिक्यवज्ररचिताः कमलदलविलसत्तुषारकणिकायमानमुक्ताफलपटलशोभिताः कृत्रिमसुमनस्तवकाः ।

देव० —( अङ्गुल्या विनिर्दिश्य ) तत्किं न वीक्ष्यते स महाराजोऽपि श्रीमान् । * यः, सयज्ञो नयज्ञः, अनलाभो नलाभः, सनीतिरनीतिः, नयशोभिप्रचारी यशोभिप्रचारः, नवकुलमालो वकुलमालः, तपति नतपतिरयम् ।

किञ्च ।

† अनिलबलोऽसावनिलान्, भूषितदेहोऽथ भूषितान् शत्रून् ।
विद्रुमगणशुभशोभो, विद्रुमगणसंस्थितांश्चक्रे ॥ १८ ॥

( निपुणं विलोक्य ) अहो सुसज्जिता सभा नृत्यगीताद्यारम्भसमय एवाऽस्ति तत्तूर्णमुपव्रज्य क्रियतां राजसाक्षात्कारः ।

( तथेति निष्क्रान्ताः )

( पटीक्षेपः सपरिवारा राजसभा )

वसन्त० ।—( राजाभिमुखीभूय ) १ वअस्स महाराअ ! सुन्दरत्तणं

१ वयस्य महाराज सुन्दरत्वं तु सुमेधसोऽप्यऽनिर्वचनीयं तत्रापि सामवांस्तु पुंवद्भावं गता सुन्दरीव शोभते ।

* विरोधाभासोऽयमलङ्कारः । तथा च । यज्ञकर्त्ता, नयवेत्ता, वह्निसदृशः, नलकान्तिः, नीतिमान्, ईति शून्यः, नयभासितप्रसिद्धिः, यशःप्रचारकः, नवीनमन्तानसमूहयुतः, वकुलमालाधारी, प्रणतपालकश्चायं प्रकाशते इति सुस्पष्टतात्पर्यम् ।

† अनिलेति । असौ स्वयम् अनिलबलो वायुबलः शत्रून् अनिलान् भूमिरहितान्, स्वयं भूषितदेहः शत्रून् भुवि उषितान्, स्वयं विद्रुमगणशुभशोभः शत्रून् विशेषेण द्रुमगणे संस्थितान् चक्रे ॥ १८ ॥

दु सुमेधस्स वि अणिब्बअणीअं तत्थ वि सामवन्तो दु पंबभ्भा अं गदा सुन्दरो विअ सोहदि ।

राजा ।—( विहस्य ) मित्र मुनयो वन्दनीया न हसनीयाः ।

वसन्त० ।—१ होलिआ समए दु हसणीआ वन्दणीया वि ।

अमात्यः ।—( साञ्जलि ) इतः प्रहिणोतु चक्षुषी श्रीमन्महाराजो यत आगतमेव देवशर्मणा पुरोहितेन सहात्र भवद्भ्यां सामवत्सु-मेधोभ्याम् ( राजा ततो विलोकयति ) ।

( ततः प्रविशन्ति देवशर्मसामवत्सुमेधसः )

देव० ।—( तौ परिचाययति )

साम० ।—( आशीर्मुद्रया )

भो भोः श्रीमन् ?

श्वेतीकृतत्रिभुवनं किल निष्कलङ्कम् ,
रात्रौ दिने च परितोपि विजृम्भमाणम् ।
पूर्णं कलाभिरभिरतुलं तव कीर्तिचन्द्रं ,
दृष्ट्वा सुखी भवतु विज्ञमनश्चकोरः ॥ २० ॥

साम० ।—( राजहस्ते पुष्पाणीव समर्पयन् )

शुभंयुर्भुयाच्चन्द्रचन्द्रिरयशोलाभवान् भवान् उन्निद्रसमुद्रमुद्रा-वच्छेदिनीं वैरिच्छेदिनीं मेदिनीं परितः पालयतु, इन्दीवरोद-रसोदरवर्णः स दामोदरः सदा मोदरतो भवतु भवति ।

सुमे० ।—( तथैव पुष्पाण्यर्पयन् )

द्राग्दारिद्र्यमुद्राविद्रावणद्रविणदानसधनीकृतावनो * वनीय-

१ होलिकासमये तु हसनीया वन्दनीया अपि ।

* "वनीयको याचनक" इत्यमरः ।

को नयनयनो विपक्षपक्षचोददक्षो धैर्यगाम्भीर्यौदार्यादिसंवलितश्च भूयाः ।

राजा० ।—( सादरं पुष्पाणि शिरसा सम्मान्य उपवेष्टुं प्रार्थयते )

तौ० ।—( सह देवशर्मणा उपविशतः )

राजा० ।—अद्य धन्योऽहं यः श्रीमद्भ्यां स्वदर्शनदानेन एवमऽनुकम्पितः । अपि प्रसीदतः तपोवनभूमिर्भूषणे इव तत्र भवन्तौ श्रीमतोस्तातचरणौ ?

सुमि० ।—महाराज इदमऽपि प्रष्टव्यम्. ?

* येषां षष्ठांशमाहृत्य भवान् सर्वांशरक्षकः ।
शतांशिनाऽपि किं तेषां प्रसादे न्यूनता भवेत् ॥ २१ ॥

राजा० ।—प्रशंसा नैसर्गिकी धर्मः सज्जनानाम्. ।

साम० ।—महाराज न केवलमाचार इति कथयामः किन्तु प्रतिक्षणं प्रतिदेशं प्रतिदिशं च दिगङ्गनागानप्रतिध्वान इवाश्रूयतेऽस्माभिः यत् । † धन्यो धर्मसिन्धुर्विदर्भराजो यः उच्चामरसे-

---

* राजा हि सर्वेभ्यस्तदाय षष्ठांशरूपं करं गृह्णाति ।

† उच्चामरसेवितः उच्चैरमरैः चामरैर्वा सेवितः । शतमन्युः = शतयज्ञः शतगुणितक्रोधश्च । विरतविग्रहः = शरीररहितः कलकलरहितश्च । सुभगरतिः = सुभगा रतिः रतिनाम्नी स्त्री प्रीतिर्वा यस्य । माधवप्रियः = वसन्तप्रियो, हरिप्रियश्च । धनदः = तन्नामा, धनप्रदश्च । राजराजः = तन्नामा, मण्डलेश्वरेश्वरश्च । विषमदृष्टिः = एकनेत्रः (कुबेरस्य एकनेत्रता काशीखण्डे प्रसिद्धा,) तारतम्येन अवलोकनशीलश्च । इनो, लोकबान्धवः, शूरः = इतिसूर्यनामानि पक्षे स्वामी, लोकप्रियः, वीरश्च । बहुव्रीहिः = समासविशेषः, बहवो व्रीहयश्च । आख्याताख्यः प्रकरणविशेषः प्रसिद्धश्च । सन्धिः = पदयोगः, प्रेमानुकूलक्रियाच । अव्ययीभावः = समासविशेषः कार्यक्षयं च । सुपक्षः

वितो निविड़ौजा विड़ौजा इवापि न शतमन्युः, विरतविग्रहः सुभगरतिर्माधवप्रियो मकरध्वजवन्मान्योऽपि न वनितासु कदापि त्यक्तवाणः, धनदो राजराजः पिनाकिप्रीतिपात्रं कुवेर इव कमनीयोपि न विषमदृष्टिः, इनो लोकबान्धवः शूरः प्रकाशितप्रबलप्रतापप्रचयः सूर्यर्चितः सूर्यसदृशोऽपि अनस्तो विचरति उपचितबहुव्रीहिराख्यातवृत्तान्तः सुसन्धिः साधको व्याकरणवद्दर्शोऽपि न सन्धारिताव्ययीभावः, सुपक्षो विपक्षाक्रमणशीलः प्रथमासद्धेतुच्छायोऽपि न सव्यभिचारः, कश्च न दिदृक्षते शुभवन्तं भवन्तं यः प्रायशो यशोलाभवान्, भवान् पराशरइव पराशयज्ञः शुकइवाशुकलितपरमार्थो, जाबालिरिव जीवालिदयालुः, गौतमइव महाभागोत्तमः, शतानन्दइव शतानन्दो गर्गइव भर्गभक्तः, शाकल्यइव च हुतशाकल्यः ॥

राजा० ।—( * सोत्प्रासं नतकन्धर इव तिष्ठति )

( अन्यैरपि समं सामवत्सु मेधसोरुचिताचारो भवति. )

वस० ।—१ हंहो अहं पणामं कहेमि आसीसं वा !

सुमे० ।—( सोत्प्रासम् ) यथा रोचेत श्रीमते ।

वस० ।—२ तहिं आसीसो जेव गेण्हीअदु ।

---

१ हंहो अहं प्रणामं कथयामि आशिषं वा ?

२ तर्हि अशीरेव गृह्यताम् ।

---

= सन्दिग्धसाध्यवत्तालक्षणः सत्पक्षश्च । विपक्षः = निश्चितसाध्याभाववत्तालक्षणः, विरुद्धपक्षश्च । सव्यभिचारः = दुष्टहेतुविशेषो दुर्व्यसनदोषदूषितश्च । तथा च व्यभिचारः साध्याभाववद्वृत्तित्वं स च यथा धूमे साध्ये वह्नौ । वह्निर्हि सव्यभिचारः पक्षं पर्वतादिकमाक्रम्य विपक्षेऽयोगोलकेऽपि वर्त्तते भवांस्तु एतादृशोऽपि न तादृशः ।

* सोत्प्रासं समनाक्स्मितमित्यमरः ।

सुमे० ।—अनुगृह्णातु आर्यः ।

वस० ।—( संस्कृतमाश्रित्य )

द्राक्षासितासद्घृतपूरपूर्णैः सुगन्धितैः कन्दुकपिण्डकान्तैः ।
सन्तोषयन्तौ वरमोदकैर्माम्, उदारचित्तौ कुरुतं विवाहम्॥२२॥

( सर्वे मन्दं स्मयन्ते )

अमात्यः ।—(राज्ञा आलप्य) वसन्तमिश्र नृत्यतु तावद् भृकुंसकः ।

वस० ।—( स्वीकृत्य उत्थाय परितो विलोकयन् )

भो भोः ।

* श्रीखण्डतुल्यो द्रविड़ोद्भवानां, मांसप्रियाणामपि मत्स्यखण्डः ।
मदर्थमिक्षुप्रभवश्च खण्डः, क्व वर्तते सम्प्रति खण्डभण्डः ॥ २३ ॥

अमा० ।—मिश्र मिश्र ( आकारयति )

वस० ।—( उपसृत्य ) १ किं वि ?

अमा० ।—न भण्डः किन्तु भृकुंसको नृत्यतु भृकुंसकः ।

वस० ।—२ तह ( प्रतिनिवर्तमानः स्वगतम् )

एदं तु मए पुब्वं जेब्व सुणिदं तह वि चउरत्तणं किदं । ( इति तथा कर्त्तुं भृकुंसकमंगुल्या निर्दिशति )

( भृकुंसको नृत्यमारभते )

वस० ।—( अमात्याभिमुखम् ) ३ पेक्खध ।

---

१ किमिव ?

२ तथा—इदं तु मया पूर्वमेवश्रुतं तथापि चतुरत्वं कृतम् !

३ प्रेक्षध्वम् ।

---

* श्रीखण्डाख्यचन्दनविशेषो भक्ष्यविशेषश्च । ( सिखरन इति प्रसिद्धः )

( संस्कृतमाश्रित्य )

मञ्जीररावरुचिरं सकटाक्षपातम्

लीलाऽलकं चलकटि स्तनकम्पशालि।

भ्रूभङ्ग सङ्गलसितं तु भृकुंसकस्य,

नृत्यं विभाति वहुझङ्कृतकिङ्किणीकम् ॥ २४ ॥

( क्षणानन्तरं पुनः )

न कामिकामकलनं न स्तनन्धयतर्पणम्।

असौ कुचयुगं धत्ते दर्शनायैव केवलम् ॥ २५ ॥

( पुनः हास्यमुद्रया )

१ अविसुणीअदु सुणीअदु

( संस्कृतमाश्रित्य )

सैवाकृतिस्तच्च मनोहरत्वं, तदेव माधुर्यमथेङ्गितानाम्।

विभाति भूत्वा वनितास्वरूपं, श्रीसामवान् नृत्यति मञ्जुमूर्तिः २६

( सर्वेषु स्मयमानेषु )

साम०।—( सकोपमिव स्वगतम् )

कथमयमसभ्यं भाषते ?

सुमे०।—( कोपमिव कलयति )।

वस०।—( पुनः सह्रीह्रीकारम् सैवाकृतिरिति पठति )

( राजादयश्च सर्वे हसन्ति )

सुमे०।—( स्वगतम् ) कथं महाराजोऽसभ्यभाषणेपि हसति। अथवा पश्यामि वड़िशच्छिन्नतालुनिस्सरच्छोणिताक्लिन्नमत्स्यमिव राजनेत्रम्। किं किं न करोति आसवः। अहो

" यौवनं धनसम्पत्तिः प्रभुत्वमविवेकिता "

१ अपि श्रूयतां श्रूयताम्।

आसवः खलसंसर्गः सर्वं कष्टमुपस्थितम् ॥ २७ ॥

साम०।—( वसन्ताभिमुखम् ) मिश्र कृतमसभ्यवाचां प्रपञ्चेन।

वस०।—( स्वगतम् ) १ एदे जेव मह खेदणीआ ( प्रकटम् ) किं वअणमत्तेण कुद्धोसि?

साम०।—मिश्र,

रोमहर्षणवृत्तान्तं संस्मृत्य शिवदक्षयोः।
प्रयोक्तव्यं बुधजनैर्विचारच्चालितं वचः ॥ २८ ॥

( इति क्रुद्ध इव तिष्ठति )

राजा०।—अलम्भो वसन्त ( सामवत्सुमेधसोरभिमुखीभूय ) क्षम्यताम् हसत्येषः।

सुमे०।—महाराज न वयं हास्यपात्राणि।

वस०।—२ होलिआ समये वि पत्ताइं?

साम०।—( तदभिमुखं क्रूरं पश्यति )

वस०।—३ * सच्चं कहेमि भअन्तो महापत्ताइं।

राजा०।—( हसति )

सुमे०।—महाराज होलिकेति किं मुनिमण्डलैरपि सह हसनीयम्?

राजा०।—( किञ्चित् सभ्रुकुटीव ) यूयं न मुनयः किन्तु मुनिबालकाः।

( सामवत्सुमेधसौ किञ्चिद् भीतौ इव तिष्ठतः )

---

१ एतौ एव मम खेदनीयौ (प्रकटम्) किं वचनमात्रेण क्रुद्धोसि?
२ होलिकासमयेऽपि पात्राणि?
३ सत्यं कथयामि भवन्तौ महापात्रे।

* महापात्रपदं निषिद्धब्राह्मणपरमितराचेपोपि।

वस० ।—१ अज्ज वम्हा वि हसीअदि किं उण मुणिमण्डलाइं ।

अमात्यः ।—( शनैः ) अनुचित एष आरब्धो वाचां प्रचारः ।

राजा० ।—( किञ्चिदाकर्ण्येव अमात्यमुखमवलोक्य ) आर्य अमात्य पूर्वसीमगतेन सेनापतिना प्रेषितं पत्रमेकमद्य मया प्रापि, तेन लिख्यते यत्, महानत्रोपद्रवो वन्यानाम्, ते सम्मुखं न युद्ध्यन्ति निद्रितेषु अन्यासक्तेषु च भटेषु अकस्मात् हिंस्रा जन्तवइव आपतन्ति । इति तत्प्रबन्धाय न पर्याप्नोति केवलमत्रत्या सेनेति सद्योराजधानीतोऽपराण्यपि बलानि प्रेषणीयानि इति तद् गम्यतामधुनैव च प्रेष्यतामपरापि सेना तत्रेति० ।

अमात्यः ।—( स्वगतम् ) उपक्रान्तो विषयो मह्यं नरोचत इति कथमपि अहं यापनीयः ( प्रकटम् ) महाराज एष गच्छामि प्रवस्तुम् ( इति निर्गच्छति )

वस० ।—( क्षणानन्तरम् सामवदभिमुखम् ) २ सम्पड़ि मए केवलं वअणमत्तविण्णासो किदो भअदा कदावि सच्चं जेव्व इत्थिआ-वेसो धारणिज्जो होइ ?

( सामवत्सुमेधसौ परस्परमवलोक्य तूष्णीकौ तिष्ठतः )

सुमेधाः ।—( सामवति विवक्षाविव जनान्तिकम् ) * अलमुक्त्वा
वाचालैः सह वाग्जालैः खेदः पल्लवितो भवेत् ।
तूष्णीम्भावे गृहीतेति तु दुर्वचाः किं करिष्यति ॥ २९ ॥

[नृत्यं समाप्नोति, वादका मन्थरितस्वरसम्मेलनाय पुनर्यतन्ते]

---

१ अद्य ब्रह्मापि हस्यते किं पुनर्मुनिमण्डलानि ।

२ सम्प्रति मया केवलं वचनमात्रविन्यासः कृतः भवता कदापि सत्यमेव स्त्रीवेषो धारणीयः स्यात् ।

---

* अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा ।

वस०।—[ राजकर्णे एवमेवं करोति राजापि क्षणमालपतीव ]

राजा०।—[ स्वगतम् ] अस्ति महाराजचन्द्राङ्गदेन सह मे भ्रातृभावः इति तत्पत्नी तत्र भवती सीमन्तिनी मे हास्यपात्रम् ( हसन् ) अस्तु, तया सह इयमेव* वसन्तक्रीड़ा स्यात्। [पुनर्विहस्य वसन्तककर्णे एवमेव ]

वसन्तकः।—[ परितोऽवलोक्य संस्कृतमाश्रित्य ] भो भोः सामवत्सुमेधसौ ! श्रूयतामऽनुष्ठीयतां च काचिद् राज्ञामाज्ञा यत्, महाराजचन्द्राङ्गदस्य महिषी साम्प्रतमत्रैव स्वनिवासेन नेदीय एव परिमलोद्यानमलङ्करोति । प्रतिसोमवासरं च तत्र भवती परमान्नमोदकवरोदकादिभक्ष्यभोज्यादिभिर्बहून् सपत्नीकब्राह्मणान् प्रसाद्य हाराङ्गदकेयूरकटककङ्कणाङ्गुलीयकादिभूषणान्युपहृत्य बहुधनैश्च सन्तोषयतीति ।

तद् भवतोः सामवांस्तु वनितावेषं कलयतु, सुमेधाश्च तत्प्रतिरूपमनुकरोतु एवं भवन्तावपि दम्पतीभूय स्व एव तत्र गत्वा सादरं भोजनसुखमनुभूय ततो बहुद्रविणान्यादाय परावृत्य इतोऽपि बहु पारितोषिकं प्राप्य स्वाश्रमं गच्छताम् इति. ।

( ततः सर्वेषु चकितेषु सामवान् सभयाश्चर्यसाहसम्. )

आश्चर्यमाश्चर्यम्. । विदर्भराजश्रीधर्मसिन्धुसमितावपि छद्ममार्गोपदेशः ? किं राजकुलेष्वपि कैतवं कृत्वा कोपि कलयति सुखम् ?

प्रसिद्धमेतद यत्,

देवतासु गुरौ पित्रोस्तथा राजकुलेषु च ।
कैतवं कलयन् मर्त्यः सद्यो नश्यति सान्वयः ॥ ३० ॥

---

* वसन्तोपदिष्टा वसन्तर्तुप्रयुक्ता वा ।

राजा०।—तत्किं नैतत् प्रसिद्धं यत्,

देवताया गुरोः पित्रोस्तथा राजकुलस्य च।
आज्ञामुल्लङ्घते योऽसौ सद्यो नश्यति सान्वयः॥ ३१॥

सुमेधः।—(क्षणं तूष्णीं स्थित्वा) महाराज तद्विषये ओमिति ब्रूमः। तथापि—

वसन्त०।—तथापि किम्. ?

सुमे०।—[तदशृण्वन्] तथापि ज्ञातदोषैरस्माभिः कपटस्तु त्याज्य एव। यतः, कृतमुनिकपटः कालनेमिर्हनूमता हतः; कपटमृगो मारीचश्च रामेण, कपटेनैव इन्द्रो गोतमशापलब्धोऽभूत् चन्द्रश्च, पीयूषपानलोलायितो राहुरपि कपटमात्रेण कण्ठच्छेदखेदमन्वभूत्, शाम्बादीनां च कपटकलनेनैव यादवकुलं नाशं प्रापत्। किंच।

पिनाकिना सती त्यक्ता वैदेही वेषकैतवात्।
को नानुभावितः कष्टं छद्मना पापसद्मना॥ ३२॥

सामवान्।—[ राजनि दृष्टिं बद्ध्वेव अवलोक्य ] ओमस्महाराज तत्राऽपि तत्र भवत्याः सीमन्तिन्याः पूजागृहं गन्तव्यमिति तु ततोऽपि कठिनतरं यतः।

राज्ञामन्तर्गेहं कथमपि यातोपि कपटपटधारी।
सर्वापदां पदं स्यात् निवर्तमानोपि लक्षितश्चतुरैः॥ ३३॥

अतो धूर्तजनप्रशंसनीयवृत्ते न वयं कथमपि बलात् प्रवर्तनीयाः।

वसन्त०।—[ साटोपम् ] अपि वयं धूर्ताः ?

साम०।—[आक्षिप्य] मित्र! न केवलं धूर्तो मूर्त्तः कपटश्च भवान्।

राजा०।—अलं पारस्परिकविवादेन नीतिवचनमेतत् स्मरणीयम्.

यत्,

यदाज्ञप्तं तु भूपालैर्गुरुभिर्जनकेन वा ।
अविचार्यैव तत् कुर्यादन्यथा तु भयं भवेत् ॥ ३४ ॥

सुमे० ।—महाराज ! अविचार्यैव ?

राजा ।—आम् अविचार्यैव अविचार्यैव ।

पश्यत, महाराजाधिराजश्रीरामचन्द्रभूपाज्ञया कुमारलक्ष्मणेन झटित्येव जनकनन्दिनी वने निर्वासिता, गुरोर्वशिष्ठस्याज्ञया महाराजदिलीपोऽपि गोचारणे गोपवृत्तौ प्रवृत्तः, अनमदग्नितेजसो जमदग्नेराज्ञया च परशुरामेण तत्क्षणमेव मातुरग्रजानां च वधो व्यधायि इति ।

[ सामवत्सुमेधसौ भुवमवलोकयन्तौ तूष्णीकौ तिष्ठतः ]

राजा ।—[ पुनः ] किं च, किं कपटवेषरचना सर्वत्रापि दुरन्तैव भवति ! पश्यत, कृतविप्रवेषकपटैः कृष्णार्जुनभीमसेनैर्जरासन्धो विजितः, निगड़गतान् राज्ञो विमोच्य सुखेन राजसूयश्च सम्पादितः, युधिष्ठिरादिभिः सपत्नीकैः पञ्चभिरपि विराड्गेहे कपटेनैव आज्ञातवासो व्यधायि । ( क्षणानन्तरम्० ) अथ वा किं बहुना यदि युवामात्मनः शुभं समीहेथे तदङ्गीकुरुतम् ॥

( सामवत्सुमेधसौ सभयमधः पश्यतः )

सुमे० ।—स्वगतम्० ) अधुना अवश्यम् ,

आज्ञाभङ्गोऽथ कपटो द्वयोरेकं विधास्यते ।
सद्यः कष्टकरस्त्वाद्यः परस्तस्माद् विधीयताम् ॥ ३५ ॥

राजा ।—[ साटोपम् ] अपि स्वीकृतम् ?

उभौ० ।—[ सभयम्० ] महाराज,

पितरौ तु परित्यज्य कुत्र यातु स्तनन्धयः ।
प्रजाया राजभीतायाः को वा स्याच्छरणं परः ॥ ३६ ॥

तत् स्वीकृतम् ।

वसन्त० ।—[ प्रसन्नतां नाटयति ]

सुमे० ।—[ स्वगतम् ] आश्चिरम्

घूर्त्ताः कर्णे जपा यत्र विदुषां चावमानना ।
स देशो दाह्यते किं न हन्यते लुण्ठ्यतेऽथवा ॥ ३७ ॥

नेपथ्ये ।—[ महाकलकलेन सह ] हन्यतां हन्यतां गृह्यतां गृह्यताम् । [ सर्वेषु सचकितं पश्यत्सु पुनः ] रक्षत भो रक्षत—

पिङ्गाक्षा रूक्षकेशा अतिचिपिटमुखा दीर्घदुर्दान्तदन्ताः ,
घोराङ्गा बद्धसङ्गा विकटकटकटाकारकोलाहलाढ्याः ।
नग्नाः संलम्बिकूर्चा असितघनरुचो निर्दयाः शोणनेत्राः ,
वन्या एते जघन्याः करधृतलगुडा घ्नन्ति लुण्ठन्ति हन्त ॥३८॥

सर्वे—अहो कुतः कुत एतद् !

[ इति सर्वे गच्छन्ति ]

[ जवनिकापातः ]

[ समाप्तः तृतीयोऽङ्कः ]

[ * घटिकार्द्धं यावदवकाशः ]

चतुर्थाङ्कपात्राणि ।

१ भिक्षुकः । [ कोपि विद्वान् भिक्षूभूतः ]
२ ब्रह्मचारी । [ योगी ]
३ सासवती । [ स्त्रीभूतः सासवान् ]
४ सुमेधाः ।
५ सारस्वतः ।
६ वेदमित्रः ।

* इव मवकाशविलेखरीतिः प्राचीना न सम्भाव्यते तथापि द्रष्टृभिनेत्रोरुभयोः सौकर्यविधायिनीति नावहेलापात्रम् ।

# चतुर्थोऽङ्कः ।

[ जवनिकापसारणं स्थानं ग्रामटिकाप्रान्तः ]

[ ततः प्रविशति करधृततुम्बीपात्रो भिक्षुकः ]

भिक्षुकः ।—[ परितो विलोक्य तुम्बीपात्रं दण्डेन वादयन् गायन् भिक्षते ]

किमपि तु भो दत्त दत्त । किमपि तु भो० ।
पुण्यकार्यमपि हृदये धत्त धत्त । किमपि० ॥ १ ॥

[ पौनः पुन्येनाम्रेडय ]

महदद्य आश्चर्यमिव प्रतिभाति । यस्मिन्नेव ग्रामे भिक्षार्थं गच्छामि तं स्वयमेव कलितोपद्रवविद्रवमवलोकयामि का नाम तत्र कथा भिक्षायाः । अधुनैव मया इतो गव्यूतान्तरस्थस्य रुक्मग्रामस्य विलक्षणदशा दृष्टा । अहह तां स्मरतोऽपि मम कम्पत इव हृदयम् ।

अहह ।

ह्यो यस्मिन् सुमृदङ्गसङ्गलसिता, वंशीरवामिश्रिता,—
अश्रूयन्त सुमञ्जुमूर्छितयुताः, स्तानैस्तता गीतिकाः ।
ज्वालाजालवलीढसर्वसदने ग्रामेऽद्य तस्मिन्नमी,
झञ्झारूषितरेणवस्तरुतले क्रन्दन्ति हा मानवाः ॥ २ ॥

[परिक्रम्यावलोक्य च] इतो वामतश्चाऽपरो मुहूर्त्तमात्रगम्य एको ग्रामोऽस्ति, रुक्मिणीं जिहीर्षुणा भगवता कृष्णेन तन्निकटे वर्त्मनि क्षणमस्थायि इति यं जनाः कृष्णवर्त्मेत्याख्यान्ति अहह सोपि अद्यैव ।

* कृष्णवर्त्मसमाश्लिष्टः कृष्णवर्त्म मयोऽभवत् ।

---

* कृष्णवर्त्मा तन्नामकोग्रामः, कृष्णवर्त्मना अग्निना समाश्लिष्टः

कृष्णवर्त्मा कृष्णवर्त्मास्य राज्ञः सममूसुचत् ॥ ३ ॥

अथ प्रविशामि अमुं ग्रामं कदाचिदत्र भिक्षां लभेय । [प्रवेशं नाटयन् तदेव पुनर्गायति ] [ अवलोक्य ] इतस्तु रुद्धानीव सर्वेषां द्वाराण्यवलोक्यन्ते तद् विपणिं गच्छामि [पुनर्गायति] [ तालत्रयेण धनश्रीरागेण ]

मह्यं किमपि दीयतां प्रज्ञाः ।

भव्यं तथा भविष्यति भवतां यथा कृता बहुयज्ञाः ॥ म० ॥

क्षुधापिशाची प्रथिता पापा तया पीड़ितो वृद्धः ।

विलपति धावति क्रन्दति गायति दयतां कोपि समृद्धः ॥ म० ॥

उदरदरीयं दुर्दमनीया यदि न भवेदऽतिदुष्टा ।

केन तदा सह्येत सकष्टं धनिनां दृष्टी रुष्टा ॥ म० ॥

शुष्यति कण्ठो ज्वलति लोचनं धड़त्करोति च वक्षः ।

स्खलितौ पादौ व्यथते मूर्द्धा कोपि न मम कृतरक्षः ॥ म० ॥

व्ययं महत् कार्येष्वल्पेष्वपि यूयं कुरुथ क्षिप्रम् ।

लज्जध्वे न कथं पश्यन्तः क्षुधाव्याकुलं विप्रम् ॥ म० ॥ ४ ॥

नेपथ्ये ।—पलायध्वं भोः पलायध्वम् ।

एते मद्यमदोन्मत्तलोहितालोललोचनाः ।

बलाद् विशन्ति गेहेषु विलुण्ठन्ति च लुण्ठकाः ॥ ५ ॥

भिक्षुकः ।—[ चकितभीत इव ] तत्किं भोः जाज्वल्यमानेऽपि विदर्भराजप्रतापे लुण्ठकाः ?

अथ वा वेद्मि ।

यदवधि मुनिपुत्रौ हेलितौ दीप्तिमन्तौ,

---

दग्धः, कृष्णवर्त्ममयः श्याममार्गमयः, अभवत् जातः । अस्य च राज्ञः कृष्णं वर्त्म पापं कर्म्म असूसुचत् अदर्शयत् ।

तदवधि नरराजो निष्प्रतापो बभूव।

यतः।

* कृतमुनिकुजमन्तुर्मथ्यते सर्वभूतैः,
प्रभवति जलराशौ किं नु नक्रापराधी॥ ६॥

[ विलोक्य ] अहो सततमेवास्मिन् ग्रामे महानुपद्रवो भाव्यते तन्नास्मिन् राज्ये तिष्ठासामि।

यतः।

समाद्रियन्ते बहुवारवध्वो, निराद्रियन्ते मुनयश्च विज्ञाः।
† कर्णेजपा यत्र खलाश्च राज्ञां, देशाय तस्मै नितरां नमोऽस्तु॥७॥

[ परिक्रम्यावलोक्य च ] इत एष ब्रह्मचारी गच्छति। तावदनुसराम्येनं पृच्छामि च किञ्चित्।

[ ततः प्रविशति कलितकौपीनतुम्बीपात्रो ब्रह्मचारी।

भिक्षुकः।—[ प्रणमति ]

ब्रह्मचारी।—[ स्वीकृतेरव ] कुतः खिन्न इव भवान् ?

भिक्षु०।—चिरं पिपासितोऽस्मि ! अपि विद्यते भवत्कमण्डलौ जलम् ?

ब्रह्म०।—अस्ति। किन्तु खेदकणाक्लिन्नेन भवता सहसैवं जलं झटिति न पेयम्।

भिक्षु०।—भोः शुष्यतीव कण्ठो ज्वलतीव च हृदयं तत् कदा पुनः ?

ब्रह्म०।—निषीदतु क्षणं तरुतले ततः पास्यति।

भिक्षु०।—आर्य।

---

* आगोऽपराधो मन्तुश्चेत्यमरः। प्रभवति प्रभुतां कार्ये परिणमयति।

† "कर्णे जपः सूचकः स्यात् पिशुनो दुर्जनः खल" इत्यमरः।

चञ्चूपुटं चटुलयन् मृतशोल्कृत्य चातकः ।
घनैर्घनरसैः किं नु ततः कुर्याद् घनाघनः ॥ ८ ॥

ब्र० ।—सैवम् ।

यावत् स्वातिं समाश्रित्य मुदिरो मुदमुन्नयेत् ।
तावदालानमायस्य धैर्यं धरतु चातकः ॥ ९ ॥

तदुपविशतु भवान् आयच्छतु च प्राणान् शीतलमुद्रया यथा सुधासारेणेव स्नातः प्रतिरोम सरसो भविष्यति ।

भिक्षु० ।—( तथेति प्राणायामं नाटयति )

ब्रह्म० ।—अपि मन्दीभूतस्तापवेगः ?

भिक्षु० ।—किमिव कथ्येत ।

* हृत्कण्ठशिरः सरसं वपुः ससारं च शीतलं नयनम् ।
सर्वमिदं सम्पन्नं प्राणानायच्छतो मम घ्राणतः ॥ १० ॥

ब्रह्म० ।—अस्तु अथ कथयतु कथमितो भिचते भवान् सीमन्तिन्यावासं कुतो न समायातो यत्र ।

द्राक्षापुञ्जैः पिञ्जरिताः पक्षितुण्डाग्रपातिभिः ।
तरवोऽपि परां तृप्तिं सूचयन्ति समन्ततः ॥ ११ ॥

भिक्षु० ।—सीमन्तिनीनामश्रवणेनस्मृतं कथयतु श्रीमान् तत्र गतयोः सामवल्गुमेधसोः को वृत्तान्त इति ।

ब्रह्म० ।—आः न श्रुतम् ?

भिक्षु० ।—न किमपि ।

ब्रह्म० ।—आः शोकः !

विप्रस्त्रीणां मण्डलीमध्यसंस्थो,
दुर्गाबुद्ध्या पूजितः पूज्यरीत्या ।

---

* प्राण्यङ्गत्वात् समाहारः ।

सीमन्तिन्या भक्तिभावप्रभावात्,
चित्रं चित्रं सामवान् स्त्रीत्वमाप ॥ १२ ॥

भिक्षु० ।—ग्रा एवं किल तत् ?

ब्रह्म० ।—एवमेव ।

भिक्षु० ।—ग्रहो,

* स्त्रिय एव तु पुम्भावः, शब्दशास्त्रे विलोक्यते ।
स्त्रीभावश्च पुनः पुंसो, न क्वाप्यऽश्रावि भूतले ॥ १३ ॥
ततः सुमेधसा किं व्यधायि ?

ब्रह्म० ।—ग्रधुनैव सामवान् सुमेधाश्च कृतभोजनौ प्राप्तविविध पूजोपहारौ पूजागृहात् निर्गतौस्तः । नगरमार्गो जनबहुल इति इत एव काननमार्गे गच्छतः । सुमेधसा तु ग्रधुनापि न ज्ञातं किं जातमिति ?

भिक्षु० ।—नाधुनापि ? तत् कथमज्ञायि भवता एष गुप्तो विषयः ?

ब्रह्म० ।—ग्रस्माभिरपि लौकिकरीत्या विषयीक्रियन्ते ग्रर्थाः ? पश्य,

कर्णौ पिधाय चिबुकं हृदि संनिधाय,
नासाग्रभागयमितां च दृशं विधाय ।
श्रोतुं च द्रष्टु मखिलं विधिना विसृष्टं,
योगाङ्गधूतकलुषा वत पारयामः ॥ १४ ॥

भिक्षु० ।—सत्यम्—ग्रथ ततः ।

ब्रह्म० ।—ततः किम् ? सन्धिसमय एष कलेः तत्तेन राजकुलं प्रविश्य तपस्विकुलापराधः कारितो यत्तत्श्रीकस्य राज्ञः सर्वोऽपि विषयः चौराग्न्याद्युपद्रवपरीतः संवृत्तः । स एव चाधुना सामवत्सुमेधसावपि प्रविश्य दुर्नयं चिकारयिषति तत् तत्रैव ग्रह-

---

* स्त्रीलिङ्गशब्दस्य समासे पुंवद्भावो दृष्टः पुंल्लिङ्गस्य तु स्वार्थापरित्यागेन स्त्रीवद्भावो न दृष्टः ।

मपि गच्छामि । एनयोः कीदृश आलापो भवति, कीदृशं धैर्यं सुमेधसः, कीदृशानि वा च्छलानि कलेरिति दिदृक्षे, यथावसरं सुमेधसः साहाय्यमपि च विधास्यामि ।

भिक्षु० ।—तदऽहमप्यनुजिगमिषामि श्रीमन्तम् ।

ब्रह्म० ।—कथमिव मया सह चरिष्यसि अहं तु आकाशमार्गेण यास्यामि ।

भिक्षु० ।—( करौ सम्पुटीकृत्य ) कथमप्यनुगृह्णातुवार्यः ।

ब्रह्म० ।—( क्षणं विचार्य ) अस्तु ( इति सतर्कं कस्याश्चित् व्रततेः पत्रमवचिनोति ) ।

भिक्षु० ।—अत्यन्तं बुभुक्षितोऽप्यस्मि ।

ब्रह्म० ।—तदपि साधयामि ( इतिपुनरन्यवनस्पतिपत्रमवचिनोति ) उपसृत्य ( एकं पत्रं दत्वा ) ( भक्षय पत्रमेतत् यथा मासं यावद् अशनायापिपासे त्वां न बाधिष्येते ।

भिक्षु० ।—अनुगृहीतोऽस्मि । ( इति भक्षयति ।

ब्रह्म० ।—( अपरपत्रमामृज्य समर्प्य च ) लिम्पैतत् पादयोयथाकाशगमनसामर्थ्यं स्यात् ।

भिक्षुः ।—( तथा करोति )

ब्रह्म० ।—अथ गम्यताम् ( इति आकाशगमनं नाटयतः )

भिक्षु० ।—(आकाशस्थः साश्चर्यम् स्वगतम्) अहो कथं देहो ममाऽतिलघुरिव संवृत्तः । अद्य जले इव वातेपि तरामि, इतो वृक्षास्ततः पक्षिणः * दक्षिणा एष ग्रामो ऽधस्तादेष जलाशयः अहो दूरतो भूभागं पश्यतः कम्पेते इवमे नयने । अहह पतनाद् बिभेमि ।

( द्वौ अपि गच्छतः )

[ विष्कम्भकः ]

---

* दक्षिणा = दक्षिणतः ।

( पटोत्क्षेपः स्थानं विविधलतावृतं वनम् )

( ततः प्रविशतो दम्पतिरूपधारिणौ सामवत्सुमेधसौ )

सुमेधाः।—( अग्रतो गच्छन् परितोऽवलोक्य स्वगतम् ) दिष्ट्या अपक्रान्तः सर्वः सार्थः। नास्त्यधुना कोपि दोषग्राही सहचरो यतो भयमाकलय्य अत्यन्तं वाग् यम्येत। दिष्ट्या परास्तोऽयं गलग्रहः। ( विचार्य ) अहो नाऽहमुत्सहे पुनरपि राजानं साक्षात्कर्तुम्, तत् स्वाश्रममुद्दिश्यैव गच्छामि।

( इति परिक्रामति )

स्त्रीरूपः सामवान्।—कान्त, कथमेकान्तमपि लब्ध्वा दवीय एव गच्छसि!

सुमे०।—( परिवृत्त्यावलोक्य स्मित्वा च )

मित्र कथमपि वाचंयमैरेव निकेतनमासादनीयम्।

सा०।—सखे चिरं वाचमयच्छम् अधुनाऽस्मिन् कोकिलकलकलोनिद्रे पीतपरागपटलपरिमलपरिपूरिते निर्जने वनेऽपि चेद् वाचामर्गलं शिथिलीकृत्य वाग्विलासरसो नास्वादि तत् कदर्थीकृतं जीवनमावाभ्याम्।

सुमे०।—सत्यं किन्तु शङ्कातङ्काकुलता तु न त्यजति माम्।

सा०।—अलङ्घ्ययापि शङ्कया पश्यैतद् वसन्तालिङ्गितं काननम्।

तथा हि।

रक्तैः पुष्पचयैस्तु गैरिकयुता पीतैः परागप्रसू-
पुष्पौघैर्हरितालिकालिमिलिता भृङ्गालिबिन्दुव्रजा।
यस्मिन् श्यामतमालपादपततिर्वर्णालिवन्मञ्जुला,
प्रोन्माद्यन्मदनस्य मञ्जु यशसां विद्योतिका द्योतते॥ १५॥

इतश्च पश्य।

मकरन्दमदोन्माद्यन्नयनी मदनातुराम्।

भ्रमरो मधुरं गुञ्जन् भ्रमरीमभिगच्छति ॥ १६ ॥

सुमे० ।—इतोऽपि पश्य ।

परिक्रमां केशरपुष्पशाखयोर्युतो भ्रमर्या भ्रमरः करोति ।

साम० ।—( विलोक्य सभ्रूभङ्गम् ) अहन्तु,

कयापि मन्ये स्मरबाणविद्धो, गान्धर्वमुद्वाहमयं तनोति ॥ १७ ॥

सुमे० ।—( स्वगतम् ) अस्य तु शृङ्गारे एवाग्रहः ।

साम० ।—प्रिय कोऽस्मिन् गुञ्जन्मधुकरपुञ्जमञ्जुकुञ्जाहते, मकरन्दकणाविलविलसद्धीरसमीरे, अतिमुक्तमुक्तामुक्ताफलविजित्वरकुसुमनिकरविरोचिते, वने रूपयौवनशालिनीमुदञ्चितरोमशालिनीमालसमाचरणां मदनमार्गणवशंवदां सुन्दरीमुपलभ्यापि नाऽनङ्गरङ्गसंवलितो भवति । यत्र ललितलतापरिरम्भणेन द्रुमा अपि पुलकिता इव सुरलोकानन्दमऽधरीकुर्वन्ति । इति कथं खलु रसज्ञो भवान् मां बाल्यात् परं वयो जुषमाणां मन्मथशरोन्मथितां ललनामवहेलयन्नेव मदनमहोत्सवमसम्मानयन्नेव च प्रयाति ।

सुमे० ।—( सस्मितम् ) मित्र अलं हास्येन ।

साम० ।—हन्त खेदः ( निःश्वस्य ) कथं खलु काममार्गणभिद्यमानहृदयाया मम प्रार्थनमस्वीकुर्वन् हास्यमिति तिरस्करोति भवान् ? अहह—श्रुतं मया वह्निसमाऽस्ति नारी,

तथाऽऽज्यतुल्यः पुरुषो मतोऽस्ति ।

* अहं तु कीलाकुलिताऽस्मि किन्तु,

कीलालवत् त्वं किल शान्त एव ॥ १८ ॥

सुमे० ।—( परिवृत्यावलोकयन् चकित इव स्वगतम् ) कथमयं मम प्रियसखा सामवान् साधारण सुन्दरीव भाषते ?

---

* कीला = ज्वाला, कीलालं = जलम् । शेषम् स्पष्टम् ।

सा० ।—( साङ्गहारम् ) किञ्च नाथ !

न किं त्वदीयं हृदयं विशन्ति, मनोजबाणाः शितभल्लतुल्याः ।
न किं मदोन्मादयदलिप्रयुक्तो, झङ्कार आराद् हरते मनस्ते ॥१८॥

तद्विधेहि मनसिजज्वरज्वालावलीढाया मे कामपि चिकित्साम् ।

सु० ।—मित्र क एष ते व्यामोहः? यत् पुरुषोऽपि वनितेव मुह्यसि ।

सा० ।—नाथ नाहं पुमान् मां तरुणीं रमणीमवेहि ।

सुमे० ।—( स्वगतम् ) तत्किमियम् अन्यस्यैव कस्यापि सुन्दरी मामनुगता ? ( निपुणमवलोक्य ) अहो,

अन्यस्य सुन्दरी नेयं सर्वा सैव छवियतः ।
सामवान् सैष * चेदऽस्ति भार्यावत् किं नु भाषते ॥२०॥

सा० ।—( पुनः ) नाथ नाहं पुमान् मां तरुणीं रमणीमवेहि ।

सुमे० ।—( समीपमागत्य दृष्ट्वा च स्वगतम् ) अस्त्येष सामवानेव किन्तु चित्रं कथमयं कामिनीकान्तिमेव कलयति, भार्याभावमेव बिभर्ति । अहो चित्रं यां रम्यां रमणीगतिं बहुधा शिचितोऽपि पूर्वं नाकलयत्, मावोचञ्च,

आच्छादितमपि वदनं, विचलितवस्त्रं क्षणे क्षणे भवति ।
कठिनो रमणीभावो, रमणीष्वेवैष वर्तते सहजः ॥ २१ ॥

चित्रं कथं तां स्तननितम्बकम्पशालिनीं मञ्जुमञ्जीररावरुचिरां युवजनमनोहरामधुना लीलयैव प्रयुङ्क्ते । अहो स्वरोऽप्यस्य कश्चिदनिर्वाच्यमेव मधुरिमाणमङ्गीकरोति । लोचने चास्य किञ्चिद्विलक्षणमेव शरसन्धानसौन्दर्यं कलयतः (प्रकटम्) अहह सामवन् कश्चमत्कारः ! कथं त्वमवगतसकलशास्त्रतत्वः, कुशाग्रधिषणो मतिमन्मान्यो, मुनिपुङ्गवस्य तातसारस्वतस्य पुत्रो

* सोचिलोपे चेत् पादपूरणमिति सुलोपः ।

मम सतीर्थ्योऽपि बालाऽहं रमणी अहं रामाऽहं कामज्वरज्वालावलीढाऽहं चिकित्सां विधेहीत्यादि बहुशो वनितेव जल्पसि।

सा०।—(निश्वस्य) नाथ नाहं सामवान्। अहं तु त्वद्रतिदायिनी सामवतीसञ्ज्ञा मदनमदमन्थरा बालाऽस्मि।

सु०।—हन्त कथं भूयोऽपि तदेव कथयसि।

सामवती।—तत्किं कङ्कणस्यापि दर्पणे साक्षात्कारः! भवानितोपि संशेते चेत् साक्षात्करोतु ममाङ्गानि।

सु०।—केयं देवमाया! (इति स्थगित इव तिष्ठति)।

सा०।— क इव परामर्शः?

अयं स्त्री पुरुषो वेति, सन्देहे समुपस्थिते।
कथं विहाय प्रत्यक्षं, श्रीमान् समनुमित्सति॥ २२॥

तत् साक्षात् कुरु मम स्त्रीचिन्हानि।

सु०।—(सचिन्तम् स्वगतम्) अहो।

सिद्धान्तयन्ति मिथ्येति, सिद्धाः साक्षात् कृतं जगत्।
अतोऽस्य साक्षात्कारेऽपि, कथं स्यां गतसंशयः॥ २३॥

तथाऽपि एनमितस्मालतीलतानिकुञ्जे नीत्वा अङ्गान्यप्येतस्य प्रत्यक्षीकरोमि (प्रकटम्)। बाढम् आगच्छास्मिन् लतानिकुञ्जे दर्शय च निजानि स्त्रीचिन्हानि।

सा०।—यदाज्ञाप्यते वल्लभेन। (इत्युभौ कुञ्जप्रवेशं नाटयतः)

सु०।—इदमितः शिलातलं तदुपविश्यताम्।

सा०।—(उपविशति)।

सुमे०।—(अवगुण्ठनमपसारयन्निव निवृत्य)

यद्येषा ललनैवस्यात्, तत एनां स्पृशन्नहम्।
भनज्मि स्वं ब्रह्मचर्यं, प्रत्यवैमि च सम्प्रति॥ २४॥

तथाऽपि किं करोमि बलादिव प्रवर्त्तितोऽस्मि दैवेन।

(इति अवगुण्ठनमपसार्य स्वगतम्) आश्चर्यमाश्चर्यम्! प्रियः सामवानेव स्त्रीत्वं गतोऽस्ति, यतः संवदत्याकृतिः स्वरश्च। (अवलोक्य) अहो अस्य तु किञ्चित् कुञ्चिता मेचकाः कचा अकृत्रिमा एव संजाताः भ्रुवौ चाऽस्य पूर्वस्मादपूर्वमेव रूपं निरूपयतः मदनेन भ्रूधनुर्भ्यां जगद्विजित्य तयोर्निर्मुक्ते प्रत्यञ्चे इव अलके अपि-कश्चिदऽनिर्वाच्यमेव रसमुद्गिरतः।

(कपोलौ निरीक्ष्य) चित्रं कथं मत्करस्पर्शेन भिन्नोऽत्र भावः। तथाहि

विलुलितहिमकणसुललितकमलम्।
निन्दति गण्डयुगलमिदममलम्।
रोम्णां निचयोऽप्यञ्चित एषः।
दुर्मदमदनमदाङ्कुरवेषः॥२५॥

(आश्चर्यमुद्रया)

चित्रं पुरुषोप्ययमिह, कलयति सर्वं स्त्रियां हि वैचित्र्यम्।
पश्चादेशेन कृतम्, यद्वद् रूपान्तरं तु दृशिधातुः॥ २६॥

अथास्य अञ्चलमपसारयामि (इति तथा करोति)

सा०।—(स्वगतम्) अहो स्पर्शः कान्तस्य (इति रोमाञ्चिता भवति स्विद्यति च)

सु०।—(स्वगतम्) अहो कान्तिः कुचयोः इमौ तु जगतो विजयं कृत्वा परिवर्त्य स्थापितौ मदनमहीपतेर्दुन्दुभी इव भासेते (विमृश्य) यद्यपि वास्तविकौ कुचावेवेत्यत्र न संशये तथापि दृढ़निश्चयार्थं कञ्चुकीमपि परिहरामि (इति तथा नाटयति)

सा०।—(स्वगतम्) कथमयं कुचौ निरावरणौ करोति बाधत इव मां लज्जा। अथवा लज्जे तृतीयस्य कथयाऽपि रहितेऽस्मिन् रहसि त्वं कुतो रतिविच्छेदकारिणी समागता! (इति शिथिलेन हस्तेन सुमेधसो हस्तं विगृह्य ससात्त्विकभावं नेत्रे मुकुलयति)

सु० ।—( स्वगतम् ) कथमेषा लज्जत इव; किन्तु नैषा प्रकृतप्रतिबन्धिका लज्जा । यतो मन्थरं गृह्णाति मे हस्तम् । ( नेत्रे अवलोक्य ) अहो शोभास्या अर्द्धमुकुलितयोर्नेत्रयोः ।

मन्य,

भ्रुवं निशानिभां दृष्ट्वाऽधरं बालरविच्छविम् ।
मुद्रितं च प्रफुल्लं च भाति नेत्राम्बुजद्वयम् ॥ २७ ॥

( कुचाववलोक्य ) अहो अवलोकनं कुचयोः । इमौ तु सुवर्णसम्पुटशोभाजिष्णू, चम्पकरुचिनिराकरिष्णू, कन्दर्पकन्दुकसाम्यसहिष्णू, स्तनाववलोक्य को न धुतधैर्यो भवति । हन्त यथा रागतानपरतंत्रान् हरिणकान् व्याधा व्यापादयन्ति तथैव रमणीरूपपरवतः कुसुमशरोऽपि स्वशरलक्ष्यान् करोति ( निःश्वस्य ) अहह व्यथयति मां मन्मथः । (इति स्तब्ध इव भवति )

सा० ।—( स्वगतम् ) कथं किञ्चित्कलितवेपथुः सरोमोद्गमः स्तब्ध इव प्रेयान् । ( विलोक्य ) अथवा युक्तम् मदन भिन्धि भिन्धि एतस्य यमनियम कर्कशं हृदयम् । ( क्षणानन्तरम् प्रकटम् ) कान्त अप्यऽवलोकितानि मम केशपाशादीनि, अवगतं मे असंशयितस्त्रीत्वं, समासादितश्च निश्चयः ?

सुमेधाः ।—(अशृण्वन् इव स्वमवलोक्य स्वगतम्) आः कुतः खिन्नानि मेऽङ्गानि ? कुतश्चायं रोमाञ्चः कम्पश्च ? अथवा बुद्धम् ।

* ग्रीष्मे स्वेदः प्रभवति, शीते रोमोद्गमः सकम्पश्च ।
सर्वं सदैव घटयति, कठिनः किलकिञ्चितो हावः ॥ २८ ॥

तन्नूनं मदनस्यैष उपद्रवः ।

(विभाव्य) हृदय धैर्यं धेहि, धैर्यं धेहि, त्वं राजसानां राज-

*किलकिञ्चितम् । यथा दर्पणे "स्मित शुष्करुदित हसित त्रासक्रोधश्रमादीनाम् । साङ्कर्यं किलकिञ्चितमभीष्टतमसङ्गमादिजाद्धर्षात्" ।

पुत्राणां नासि अपि तु सात्विकानां मुनिपुत्राणामसि, धैर्यं धेहि ।

सा० ।—नाथ अलं मनः कथाभिः ।

सु० ।—किं वा कथयसि ?

सा० ।—ननु कथयामि अवलोकितानि मम केशपाशादीनि ? अवगतं मे स्त्रीत्वम् ? समासादितश्च निश्चयः ?

सु० ।—आम्, अवागमि यत् त्वं नाधुना सामवान् किन्तु सामवत्यसि परन्तु हा कथं त्वं मत्सखा सकलविचारपारावारपारगः कुशाग्रधिषणो विद्वानपि गर्हितमिमं वनिताभावं प्राप्तः ! हा मम तु तदैव कम्पितमिव हृदयं यदा पथि सम्मुखमेव बन्धुजीवस्य च्छिक्का जाता ततोऽपि तातदत्तं विल्वपत्रमस्मासिः क्वापि असावधानतया पातितम्, ततोपि च असाधुराजाज्ञापालनस्य छलेन परवञ्चनस्य च फलमेतत् चकास्ति विजृम्भते च प्रकटः प्रभावः सोमन्तिन्या भक्तिभावस्य ।

सा० ।—रमण, कारणं तु किमप्यऽस्तु ।

परन्तु सम्प्रति,

नव्यामपि भव्यामपि, तापविशेषात् विशीर्णवरवर्णाम् ।
त्वं मां विद्धि प्रियवर, कलिकामिव वहुशिलीमुखैर्विद्धाम् ॥२९॥

तस्मात्,

कुरु परिरम्भं गाढं, चुम्बनदानैस्तृषां शमय ।
साष्टशरमणीरमणे, रधरीकुरु सुरनिवाससुखम् ॥ ३० ॥

सु० ।—( वारयन् ) आः क एषते चित्तक्षोभः ? कथं धैर्यं नावहसि कथं वा न स्मरसि पूर्ववृत्तान्तस्य ? यद्यपि सीमन्तिन्या सबहुभक्ति दृढनिष्ठया पार्वतीधिया पूजितः * सोमन्तिनीत्वमेव ग-

* सीमन्तिनीत्वं स्त्रीत्वं "स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः" इत्यमरः ।

तोऽसि तत् किं क्षणमात्रेणैव एवं धैर्यशून्ये न भाव्यम्? तपः-पारावारौ आवयोः पितरौ कदाचिदद्यैव त्वां पुनः पूर्ववत् कुर्याताम्। अथवा यदि दैवाद् दुर्वार एवाऽस्ति ते रमणीभावस्तर्हि वेदविधिना स्थापित्वा दत्ता मया सबहुमानं परिणीता सुखेन रंस्यसे। न शोभते ते बालानामिव चापलमूलको हठः।

सा०।—सत्यमस्म्यहं बाला, तत् कथं धैर्यं दध्याम्। क्वाऽहं यौवनमदपरवती, क्वेयं धैर्यं घस्मरस्य स्मरस्य शरसन्धानचातुरी, क्वायं वसन्तस्य सर्वसुखमयः समयः, क्व तन्मुञ्जुगुञ्जदलिपुञ्जावृतं वनम्, क्व च करेणौ कोरक विशेष इव एष भावत्क उपदेशः। अतो मा स्म वञ्चितो भूः अवधेहि—

काल: कान्तो वसन्त: पिकरवरुचिरो मञ्जुलश्चैष कुञ्जः,
कन्दर्पोद्यदाशाऽहमपि च युवतिर्निर्जनश्च प्रदेशः।
साभूत् ते हन्त मोहो रमय रमण मां रन्तुकामां रसज्ञ,
भूयो भूयोऽनुकूलं नभवति निखिलं वाञ्छितं कार्यजातम्॥३१॥

सु०।—(आकाश इव दृष्टिं बद्ध्वा स्वगतम्) आः कन्दर्प कथं त्वं सकलव्यवहारमलभूतं मन एव प्रथमं क्षोभयसि? केयं ते वीरता यद् बालाः कोमलाङ्गीरपरिणतमतीः स्त्रीरेव प्राधान्येन विद्यसि! अहह चनया असावधानजनहरिणाखेटकलोलया कस्ते स्वार्थः सेत्स्यति? अथवा जानामि स एव निर्विचारस्त्वम् यः पितामहमपि वाणैः प्रजहार, यच्छापदग्धस्य च तव विग्रहं दुरभ्यासदोषदर्शनखिन्नो भगवान् भर्गो भस्मीचकार। (परितोऽवलोक्य) परमहह दुष्टः स्वभावो मदनस्य! हन्त।
येन चापलेन दग्धदेहतां गतोऽस्त्ययं,
दोषमेष तं जहाति नो * इतोऽपि मन्मथः।

---

* ओदन्तो निपातः प्रगृह्य इति न सन्धिः।

भस्मतां गतोऽपि नो जहाति रज्जुपाशको,
ग्रन्थिबन्धवक्रतां प्रसिद्धमस्ति भूतले ॥ ३२ ॥

( पुनराकाशे दृष्टिं बध्वेव ) अहो मनोजवाणाः यूयं तु कुसुमस्वरूपाःस्थ तत् कोमलता परिपूरिता अपि दीनान् दुरन्तदुःखोदधौ पातयन्तः कथमिव क्रूरं कर्माकलयथ ? अथवा 'स्वयं विनिष्टः परनाशने पटुः' इति प्रसिद्ध आभाणकः तद् यथा यूयं स्वयं पञ्चत्वं गतास्तथाऽन्यानऽपि पञ्चत्वं प्रापयथ । यूयं च वस्तुतो मार्गणास्तत् कथं नान्यान् रतिमार्गणान् विधास्यथ ! किन्तु युष्मदधिष्ठाता सुमनास्तज्जनकस्यापि च प्रसिद्धं सुमनस्त्वम्। भवन्तोऽपि सुमनस्स्वरूपा भिन्नय च सुमन एव यूयम्। अहह परम्पराप्राप्तं सौमनस्यं कथमिव दत्तजलाञ्जलीकृतम् ? ( विचार्य ) अये स्मरधनुः त्वं तु इक्षुमयमसि यस्य पीड़नेनाऽपि जना मधुररसं विन्दते, त्वं कथं परान् पीड़यसि ? अथवा स्त्रीपुंसयोः पारस्परिकोत्कण्ठाजन्यां पीड़ां त्वं कथमिव ज्ञास्यसि यतः शाब्दिकाचार्यैः क्लैब्यं प्रापितमसि । अहह यथा च त्वम् उभयतः कलितार्तिरसि तथाऽन्यानपि परितःकलितार्तीन् करोषि ( विचारं नाटयन् ) हा प्रथमतस्तु मनः स्वभावत एव विषयलोलुपं भवति, ततोपि ऋतु राज राजितं वनमेतत्, ततोऽपि च प्रदेशोऽयं निर्जनः, तत्राऽपि सहानुगता रूपवती रमणी, अहह सापि च स्वयमेव सुरतप्रार्थनां करोति। हा ! कष्टम्, भो मदन रतिनाथ त्वमपि किमस्मिन्नेवाऽवसरे निजां शरक्षेपचातुरीं दर्शयसि ( परिक्रम्यावलोक्य ) अथवा यद्यपि जानामि स्वयमेव खिन्नानऽन्यमनस्कान् पुरुषान् विस्मृतपरिधानकबरशेषिल्याः स्त्रीरपि च प्रहरसस्त्रीकृतवीरनियमोऽसीति, तथाऽपि त्वां शिरसाञ्जलिं बध्वा प्रार्थये ।

सा०।—नाथ, किमिव स्थगित इवाऽसि? मदनं वा न मानयसि?

सु०।—एष मानयामि प्रणमामि स्तौमि प्रार्थये च। अवधेहि।

सा०।—अवहिताऽस्मि।

सु०।—(अञ्जलिं बद्ध्वा आकाशाऽभिमुखम्) मदन। जितं जितं त्वया जगदऽखिलम्, येन त्वया तीव्रतपस्तापितब्रह्माण्डमण्डलो भगवान् विश्वामित्रोऽपि शुनकतां नीतः कस्तदग्रे अहङ्कर्तुमलम्। तथापि नाथ किं वीर हृदये कृपाकार्पण्यमेव भवति किं वीरा उचित मनुचितं वा न विचारयन्ति? हा क्वैषा अभिनवतरुणी उद्भिन्नयौवना च क्वैतस्याः कोमलान्यङ्गानि अननुभूतकान्तसङ्गमसुखानि च, क्व च भवतो भयङ्कराः क्षुरप्राः पञ्च शराः अनवरतनिपाता अविलम्बितगतागताश्च! अहह अपि विचारय, अपि मर्षय, अपि दयस्व, अपि त्यजैनाम्। अथवा किमेषैव, अहमपि किञ्चिद् यौवनपरिमलस्फुरितदेहोऽस्मीति किमिव मामपि लक्षीकृत्य टङ्करोषि निजं धनुः, (गद्गद इव) प्रभो! ब्राह्मणस्तत्रापि मुनिपुत्रस्तत्रापि च कलितनिर्मलब्रह्मचर्यः किमेवं पशुमारं मारणीयः। मया भवान् लुण्ठितो वा घातितो वा उपहसितो वा निन्दितो वा यदेवं मयि क्रुद्धोऽस्ति?

(अश्रूणि प्रोञ्छ्यैव करौ सम्पुटीकृत्य गायति)

(वसन्तरागेण)

स्मितकृतविस्मितकुसुमविकासः। कृतयुवजननववनितादासः॥
खण्डितबहुमुनिनिवहसमाधिः। प्रियविरहितजनहृदयकृताधिः ३३
नयनयुगलजितखञ्जनकान्तिः, सुमशरनिहतयोगिगणशान्तिः॥
ताम्बूलीरसरञ्जितदशनः, विद्युद्दामविजित्वरवसनः॥ ३४॥

जितकलगलकलकूजितवचनः, अलिकविहितबहुकेसररचनः ॥
मालतिकामालालयहृदयः, भवतु सदा मदनो मयि सदयः ॥२५॥

अपि च ।

कलयन् धनुरिक्षुमयं स्वकरे, भ्रमरावलिभासितमञ्जुगुणम् ।
कुसुमस्य शरानऽपि पञ्च दधत्, मदनोऽस्तु सदा सदयो हृदये ॥ २६

सा० ।—( हृदये हस्तं विन्यस्य ) हा—कष्टं ! नाथ त्वमेव चेन् मयि दयां नावहसि कथं तर्हि मदनस्त्वयि दयां वक्ष्यति । अहह कथं सुमतिनिकेतनोऽपि त्वं काममार्गणपर्याप्तौषधं मां परित्यज्य इतस्ततो भ्राम्यसि ? ( कोकिलकलकलं भ्रमरझङ्कारं च आश्रुत्येव ) अहह त्वयि विमुखे एते कोकिलकलकाकलीकलकलाः, माकन्दवृन्दमञ्जुमञ्जरीमरन्दमुदितमानसमधुकरमधुरझङ्काराश्च मम कर्णयोः तोदा इव सञ्जाताः । एष च वायुः यः—

मकरन्दकणैः खिन्नः, प्रति कुञ्जं च त्वजन् सजवगमनम् ।
पथिक इव मारुतोऽयं, श्रान्तो मलयात् समायाति ॥ ३७ ॥

हन्त सोऽपि ज्वालामालाजालावलीव तापयति मेऽङ्गानि ।

( अवलोक्य )

मा तापय मा मारुत, मा रुतमाकलय कलकण्ठ ।
किं रे कूजथ मधुपा, मधुपानं कुरुत तूष्णीकाः ॥ ३८ ॥

( पुनः सुमेधसमुद्दिश्य साक्षेपम्. )

पुलकितमिहतरुनिकरं, दृष्ट्वा जड़मपि लताभिराश्लिष्टम् ।
मामाक्षिपन् क्षमालय, तरुणीं रमणीं न लज्जसेऽद्य कथम् ॥३९॥

( क्षणानन्तरत् ) पश्य इदमवलोक्येव तवानुचिताचरणं तरवोपि हसन्तीव । ( वृक्षानुद्दिश्य )

हसत हसत यूयं श्वेतपुष्पच्छलेन,
मिलदनिलसुशाखाग्राङ्गुलिं चालयित्वा।

सु०।—( अपवार्य ) सत्यं हसत हसत,
यदिह मुनिसुतोऽयं प्राप्तभार्यास्वभावो।
विहतमतिवितानो दीनवद् दीव्यतीह ॥ ४० ॥

सा०।—कष्टं पुनरपि विपरीतमेवोपदिशसि! ( निश्वस्य ) हृदय सुखस्य प्रत्याशां त्यज अहो विलक्षणव्याध मन्मथत्वमपि शरसन्धानपरिश्रमं विजहीहि यतः स्वयमहं प्राणांस्त्यजामि।

( सशोकं प्राकृतमाश्रित्य. )

१ पडिवांछिदविविणमज्झो, णिज्जणदेसो वि बहुमहुरो।
अच्चरिअं अच्चरिअं, तहि वि मरणं हि सरणं मे ॥ ४१ ॥

( इति वक्षः संताड्य निपतति मूर्च्छति च )

सु०।—( सचकितं सकरुणं सक्षोभं च ) आः किमेतत्—सामवति सामवति—अहह कथं न शृणोषि—सामवति—हा कथं मूर्च्छितासि!—( निजोरुं तदुपधानीकृत्य वस्त्रमपसार्य करेण ललाटं स्पृशन् ) अहह मूर्च्छेयं मदनज्वरजनिता।

यतः

स्वेदयति खेदयत्यपि, तापयति तथा विवर्णयति।
स्मरणस्याऽपि च हरणं, स्मरज्वरोऽयं करोतितराम् ॥ ४२ ॥

अहह

नासत्यौ नहि सत्यतां कलयतो धन्यो न धन्वन्तरि—
र्क्षीणः संचरतीह नापि चरकः काशीश ईशो न च॥
काव्येनापि न भाव्यते च नकुलो बोभोति चिन्ताकुलो,

१ प्रतिवांछितविपिनमध्यो निर्जनदेशोऽपि बहुमधुरः।
आश्चर्यमाश्चर्यं तथाऽपि मरणं हि शरणं मे॥

दुर्दान्तं मदनज्वरं शमयितुं शक्नोति किं मादृशः ॥ ४३ ॥

हा किमहमेकाकी अस्मिन् प्रान्तरे वर्त्मनि करोमि ? अहं स्वयमेव अपरिणतवया यस्य मे वाहुरिव सखाऽऽसीत् अहह सोऽयं दैवात् स्त्रीत्वं गतो यौवनमदमत्तो मत्तो रमणमाकांक्षमाणो मन्मथामथितो मूर्च्छितोऽस्ति । मदनेनाहन्यमानं ममाऽपि च हृदयं नाऽस्त्यधुना मद्वशंवदं तत् किमिव करोमि— हा हतोऽस्मि । ( इति अश्रूणि मुञ्चति )

नेपथ्ये ।—( ब्रह्मचारिस्वरेण )

उत्कृष्टेष्वपि विघ्नेषु, वर्त्तमानेषु यो जनः ।
धैर्यं धुनोति न स्त्रीयं, सन्नेयो धैर्यधूर्वहः ॥ ४४ ॥

सु० ।—केनेव बोधितोऽस्मि ( विलोकयन् ) नूनं साहाय्यं विदधति तपोवनदेवता एताः । सत्यं किं विघ्नेष्ववर्तमानेष्वपि भवति परीक्षा धैर्यस्य ? न कदापि । तत् प्राप्तबुद्धिना भाव्यं मया ( नेत्रे विमृज्य ) अथ किं करणीयं ? मूर्च्छित एवायं कदाचित् प्राणानपि त्यजेत् । ( कदलीदलमादाय तेन वीजयन् विचारयति ) ( क्षणानन्तरम् ) एवमेव करिष्यामि । स्वकीयं ब्रह्मचर्यम् एतस्याश्च प्राणान् यदि च्छलेनाऽपि रक्षेयं तर्हि तच्छलमपि मन्ये प्रशंसनीयमेव भवेत् ।

सा० ।—( शनैः शनैः मूर्च्छामपहाय )

क्वाहम् ! ( उत्थायोपविश्य च परितः पश्यन्ती ) कथमहं वने ? कुतएष कुञ्जः ? कथमश्रु धाराकलिलौ मे कपोलौ ? कथमसुप्तमिव ? कथं विगलितं मे वस्त्रम् ? क एष मां वीजयति ? ( निपुणं निभाल्य ) कथमयं मे प्रियः सुमेधाः ? तत्करौ विगृह्य ) अहह नाथ ! अहह मदनज्वरवैद्य ! ! अहह विरहबाधाम्भोधिकर्णधार

---

✻ धैर्यस्यधूर्वहः । अन्यथा धैर्यधुरवह इत्येव स्यात् ।

त्वदधीनाऽहं जहि पाहि वा ।( इति मुखमपवार्य रोदिति )

सु० ।—( स्वपटान्तेन तन्मुखमामृज्य ) समाश्वसिहि समाश्वसिहि ( अङ्गुल्या निर्दिश्य ) पश्य स गुञ्जदऽलिपुञ्जो मल्लिकालतानिकुञ्जो नेदीयानेवोपलक्ष्यते तत्र हि त्वां गान्धर्वेण विधिना परिणेतुं यतिष्ये ( इति उत्थाय स्ववामहस्तेन तद्दक्षहस्तं गृहीत्वा गमनं नाटयति )

सा० ।—( स्वगतम् ) दिष्ट्या पुनरपि मे जीविताशा सम्पन्ना हृदय समाश्वसिहि समाश्वसिहि । सम्प्रति मां वामाङ्गे कलयता प्रियेण बहु सूचितम् । ( परिक्रम्यावलोक्य च प्रकटम् ) प्रिय अथ कति दूरं स कुञ्जोऽस्ति ?

सु० ।—( निर्दिशन् ) प्रिये किं न पश्यसि अस्मात् कदम्बकदम्बकात् परतो या च सा नतमालतमालमिलितमल्लीवल्लीपटली, तत्समीप एव मिलद्गन्धव्रातवातव्याधूतचूतमञ्जरीसमास्वादसंसक्तकोकिलकलकूजितपूजितो लसद्भ्रमरगुञ्जः कुञ्जोऽस्ति। तत् सपदि गच्छ यथा सत्वरमासादयामः ( विलोक्य ) कथं मन्थरितेव गच्छसि ? अवधेहि ( स्वगतम् ) अधुना नेदीयसि तस्मिन् कुञ्जे कथमप्येषा वञ्चनीया ।

सा० ।—( तत्कुञ्जमासाद्येव ) अथ इतोऽपि परं क्व यासि ? सोऽयं कदम्बपादपः, सा चेयं मल्लीवल्लीपटली परित्यक्ता, तच्चैतत् कुञ्जम् । ( इति सुमेधसः कण्ठे बाहुमर्पयति )

सुमेधाः ।—( किञ्चिन्मदनाहत इव ) ( स्वगतम् ) आः गृह्णात्येषा कण्ठम् ! अहह एतत्कण्ठग्रहोद्दीपितो विकारो व्याप्नोति पुनर्मदीयं हृदयम् । अहह चिरचितब्रह्मचर्यं मां कामः कामहह कीर्तिं कलयितुं दुनोति ? अथ पुनरेनां वञ्चयामि यतो नाति दूरमधुनाऽस्मदाश्रमः यदि काभिश्चिद् युक्तिभिः कथमपि

कियन्तमध्वानमतिक्रमिष्यामि तत्प्रत्यन्ताऽऽयातमेव प्राप्नोमि विल्लवनम् ।

सा० ।—नाऽथ कथमितोऽपि परं गच्छसि ?

सु० ।—( परितो विलोकयन् दर्शयंश्च ) प्रिये स्थलमिदमनाहतं तदऽमुं लताबहुलतापिहितोदरं दरविकसितप्रसूनमधुगन्धान्धभ्रमत्ससम्भ्रमभ्रमरम् पुरोवर्तिनं प्रदेशं सनाथय ।

सा० ।—( १ ) जं आणवेदि अज्जउत्तो ।

सु० ।—( स्वगतम् ) अनया शनैः शनैः प्राकृतेनाऽपि भाषितुमारब्धम् ।

सा० ।—( कण्ठार्पितबाहुलतैव गच्छति )

सु० ।—( स्वगतम् ) कथं पुनर्धुनोति मां पुष्पधन्वा । अहह कथं कम्पन्त इव स्विद्यन्तीव च मेऽङ्गानि कथमिव च यमनियमकठोरीकृतमपि द्रवीभवतीव हृदयम् ? तत् किं गृह्णामि पाणाविनां गान्धर्वेण विधिना ?

नेपथ्ये ।—( धनश्रीरागेण गीयते ) ( ब्रह्मचारिस्वरेण )

शम्भुं ध्यायत धीरधुरीणाः । शम्भुं० ।—

अर्द्धाङ्गीकृतगिरिजं गिरिशं गायत रणयत वीणाः ॥ श० ॥

व्यालबालवलयं बिभ्राणं दक्षिणचरणे देवम् ।

वामे मणिमौक्तिकमञ्जीरं दधतं दुर्लभसेवम् ॥ श० ॥

( उभौ शृणुतः )

गजचर्माम्बरलसितमेकतः साङ्कसुधांशुच्छायम् ।

परतः पट्टाम्बरपरिवेष्टितमतिशयमञ्जुलकायम् ॥ श० ॥

अक्षभूषितं भसितच्छुरितं दक्षाङ्गे जगदीशम् ।

काञ्चनकाञ्चीमौक्तिकमालालसितं परतोऽपीशम् ॥ श० ॥

( १ ) यदाज्ञापयत्यार्यपुत्रः ।

आत्मनामजपसाधनसक्तां दक्षे दधतं मालाम्।
वामे करे कमलकलिकामथ कलयन्तं सुरसालाम् ॥ अ० ॥
हालाहलकालिमाविलं गलदेश एकतः शर्वम्।
परतो लम्बितरत्नावलिभिर्हतरत्नाकरगर्वम् ॥ अ० ॥
भस्मविलेपसुकेसरचर्चालसितविशालललाटम्।
चन्द्रकलामणिमण्डितचूडं चोटितमुक्तिकपाटम् ॥ अ० ॥
ध्यानजड़ोन्नतपुलकितप्रमुदितनिश्चलदक्षशरीरम्।
तत्सेवाप्रवणेन परेण च वपुषा लसितं धीरम् ॥ अ० ॥ ४५

सा०।—* नाथ अस्मिन् निर्जनेपि वने क एष गायति ?

सु०।—प्रिये मन्ये कोऽपि गन्धर्वः सिद्धो वा भक्तिभावपरतन्त्र एषः तद् गम्यतां परतः।

सा०।—( सशोकमिव गच्छति )

सु०।—( स्वगतम् ) अहो अनया अर्द्धाङ्गमिवगीत्या केनापि सुष्ठु उपदिष्ट इवास्मि। अहह धन्योऽसि परमेश यस्त्रिलोकसुन्दरीं भगवतीमर्द्धाङ्गे कलयन्नपि, मदनारिः ध्यानजड़ीभूतश्च अहो काऽत्र गणनाऽस्मादृशानां तुच्छजीवानां ये वनितानां नामस्मरणमात्रेणाऽपि दर्शनमात्रेणापि, भाषणमात्रेणापि, स्पर्शनमात्रेणापि च मन्मथशराघातमूर्च्छिता, विकला, विह्वला, लुण्ठिता इव, विहता इव च भवन्ति। अहो पुनः परिपुष्टं मम धैर्येण शिथिलीभावं चासादयन्ति कुसुमशरशराः। धन्य चन्द्रचूड़, धन्य मृत्युञ्जय, धन्य कालकूटकण्ठ, धन्योसि यः स्मृतमात्रोऽपि मदनं भस्मसादिव करोषि; त्वां सर्वथा प्रणमामि।

---

* नवः स्त्रीभाव इति कदाचित् संस्कृतं कदाचिच्च प्राकृतमपि भाषते।

सा०।—१ णाह अवि णाम सुणिदा गीदिआ ?

सु०।—श्रुता।

सा०।—२ ता किं इदो वि विलम्बइ अज्जउत्तो ? पेक्खदु एसो महादेओ जोअधणो वि वामङ्गे इत्थिअं धारेदि।

सु०।—( स्वगतम् )

याद्दशी भावना यस्य, सोऽर्थं गृह्णाति ताद्दशम्।
* सेशं निरीशं च मतं, द्विधाऽभूत् कापिलाद्यतः॥ ४६॥

( प्रकटम् )

प्रिये गीत्यर्थमेव चिन्तयामि।

सा०।—( स्तोकमिव पन्थानमतिक्रम्य ) ( स्वगतम् ) सम्प्रति तु आसादितं कुञ्जान्तरमेतत् यत्र माकन्दवृन्देषु क्रीड़न्तः पिका अपि काश्चित्कान्ताश्लेषविशेषोपदेशशालिनीमधुना मधुना समां काकलीमाकलय्य आकुलीकुर्वन्ति विरहविधुरान्। तदहमपि प्रियमालिङ्ग्य तदधरसीधुपिपासामपसारयामि। ( इत्यकस्मात्सुमेधसमालिङ्ग्य चुचुम्बिषुरिवालम्बते )

सु०।—( ससम्भ्रमं करेण चिबुमवष्टभ्य विनिवारयन् ) आस्तिष्ठ तिष्ठ।

१ नाथ अपि नाम श्रुता गीतिका ?

२ तत् किमधुनापि विलम्बते आर्यपुत्रः ? प्रेक्षतामेष महादेवो योगधनोऽपि वामाङ्गे स्त्रियं धारयति!

* 'ईश्वरासिद्धेः' इति कापिलसूत्रादेव एके ईश्वरासत्तामवधारयन्ति अन्ये च तत्सत्त्वेऽपि तस्य वाङ्मनसयोरगोचरतामवगच्छन्ति।

सा०।—१ ता को क्खु एत्थ वि वितक्को ?

सु०।—( स्वगतम् ) अहह पातयति मे धैर्यद्रुममेषा कूलङ्कषा सामवती सरिता ! ( प्रकटम् ) आः प्रेयसि भ्रान्तावावाम् सत्वरं त्याज्य एष प्रदेशः।

सा०।—२ ता किं भअं किं वि ?

सु०।—( स्वगतम् ) अधुना इयमाश्लेषं रचयति अहं च श्लेषं रचयामि ( प्रकटम् ) अयि पलायावहे पश्य। इतः* शिखी प्रसरति, ततश्च स्वाङ्गमान्दोलयन् केशरिकदम्बः समुज्जृम्भते, स्थानमेतत् कुञ्जरोचितम्, परितश्च पलाशिनः वीक्ष्यते चायमच्छको विदारकः, हन्त भूप्रदेशोऽयं व्याघ्रपादासादितः, किमिव कथयामि प्रिये मा विलम्बस्व—पश्य—

⁂ सज्जखोरगणं शिलोमुखयुतं कान्तेऽच्छदेशं तथा,
द्रागान्दोलितपुण्डरीकनिकरं योग्यं स्थलं भोगिनाम्॥

१ तत् कः खल्वत्रापि वितर्कः ?
२ तत् किं भयं किमपि ?

* शिखी = अग्निर्मयूरश्च। केशरिकदम्बः = केशरवान् कदम्बवृक्षः, सिंहसमूहश्च। कुञ्जरोचितम् = गजयोग्यं, निकुञ्जशोभितं च। पलाशिनः = मांसाशिनो, वृक्षाश्च। अच्छकोविदारकः = विदारणशीलो भल्लूकः, स्वच्छः कोविदारवृक्षश्च। व्याघ्रपादः = वनस्पतिविशेषः, व्याघ्रपदचिन्हं च।

⁂ सज्जखोरगणम् = परिष्कृतं भटसमूहम् ( अस्मिन् पक्षे बवयोरभेदः ) उत्तमजखोरवृक्षसमूहं च। शिलीमुखाः = बाणाः, भ्रमराश्च। अच्छो = भल्लूकः स्वच्छश्च। पुण्डरीकनिकरं = व्याघ्रनिकरं कमलनिकरंच। भोगिनः = सर्पाः विलासिनश्च।

तिष्ठासत्युत को विलोक्य मतिमान् स्थानेऽत्र वाञ्छन् सुखं,
तूर्णं पूर्णमृगाङ्कमञ्जुवदने तस्मात् पलायावहे ॥ ४७ ॥

( इत्युभौ गच्छतः )

( ततः प्रविशतश्चकिताविव ब्रह्मचारिभिक्षुकौ )

भि० ।—सुमेधः योगी असि ।

ब्र० ।—अथ किम्, पश्य—

रूपवत्या युवत्याऽपि प्रार्थितो निर्जने वने ।
मन्मथामथितो नस्यात् को भूमौ योगिनाविना ॥ ४८ ॥

भि० ।—(मस्तकमान्दोलयन्) आः। न केवलं स नाममात्रेण सुमेधाः।

ब्र० ।—अथ किं, निरीक्षस्व।

नूनं कनकसमाख्यां, बिभर्तु धूर्तोऽपि धूर्त्ततरः।
कुण्डलमण्डलरचने, कोऽलं चामीकरादन्यः ॥ ४९ ॥

भि० ।—अथ सम्प्रत्येव तेन कथमिव बुद्धिमत्ता प्रकटिता गमनसमये।

ब्र० ।—यथार्थम् एवं मतिस्फुरणं नहि भवति सर्वसुलभम्। अपि अवगता त्वया सर्वापि तच्छ्लेष भङ्गी ?

भि० ।—न साकल्ये न।

ब्र० ।—तच्छृणु * ( इति तच्छ्लेषार्थं बोधयन् परिक्रामति )

भि० ।—( अवगत्येव ) अहो चमत्कारः।

ब्र० ।—( स्तोकमिव पन्थानमतीत्य ) अधुना तु अस्यैव विल्ववनस्य अन्तस्तयोराश्रमस्तद् दृश्यतां कथमिव तयोस्तातसाक्षात्कारो भवतीति !

भि० ।—एवं क्रियताम्। ( इत्युभौ निष्क्रान्तौ )

(पटीक्षेपः स्थानम् सारस्वतसुमेधसोराश्रमप्रान्तः विल्ववृक्षावृतः)

* अभिनयसमये सकलद्रष्टृवबोधार्थमेष व्यापारः।

( ततः प्रविशतः विस्वपत्राणि चिन्वन्तौ सारस्वतवेदमितौ )

सार० ।—( पत्रचयनं नाटयन् ) मित्र स्वप्नस्याऽपि विलक्षणो भवति व्यापारः ।

वेद० ।—(पत्रचयनम् नाटयन्) तत्किमपूर्वं किमप्यऽद्य विलोकितम् ?

सार० ।—सखे किमिव कथयामि ! अद्य प्रभातकल्पायां यामिन्यां मया स्वप्ने सुद्युम्नस्य सर्वोऽपि वृत्तान्तो यथावस्थितो दृष्टः ।

वे० ।—सखे विशकलय्य कथय ।

सार० ।—अवधेहि ( इति सर्वं तच्चरितं सङ्क्षिप्य तत्स्त्रीभावान्तं कथयति )

वे० ।—ततस्ततः ।

सार० ।—सखे तत्क्षणमेव केनाऽपि हस्तग्राहमिवोत्थापितस्य मे निद्रा भग्ना ।

वे० ।—ततः ।

सार० ।—ततश्च अकस्माद् भयेनेव तथा विक्षुब्धो ऽहं यत् अधुनाऽपि सत्यं कम्पत इव मे हृदयम् !

वे० ।—( सचिन्तम् ) अत्र भीतेस्तु कामपि सोपानप्रणालीं न पश्यामि, तथाऽपि,

अकस्मात् कम्पितं चेत् स्यात्, हृदयं तु महात्मनाम् ।
भविष्यन्तीं ततो भीतिं, सूचयेत् तन्न संशयः ॥ ५० ॥

सार० ।—( वामनेत्रस्फुरणमिव नाटयित्वा ) पश्य पश्य एष दग्धे इव लवणप्रक्षेपः ।

वेद० ।—किमिव ?

सार० ।—शोकेन चिन्तयाम्येतत्स्वप्नस्यैवाशुभम् फलम् ।
तावद् विक्षोभयदिदम्, स्फुरितं वामलोचनम् ॥ ५१ ॥

वेद०।—(चकित इव) कथं क्षणे क्षणे शकुनविपर्यासः ? मित्र किमधिकं मङ्गलमाशासनीयम् ? केवलं पुत्रावावयोः शुभंयू भूयास्ताम्।

सार०।—ममापि तत एव साशङ्कं हृदयम्। यत् तौ तस्करैराक्रान्तौ वा, व्याघ्रादिभिर्भीषितौ वा, राजकीयैरवहेलितौ वा, वन्यैश्च वेष्टितौ वा। किमिव तौ दुःखाकरोतीति तु नाऽवगच्छामि यत् क्षणे क्षणे धडत्करोति मे हृदयम्।

वेद०।—(ऊर्ध्वमिव निःश्वस्य) अहो इतो दुश्शकुनपरम्परा ततश्च तयोर्नूतनो विदेशव्यापार इति संस्मृत्य चञ्चलीभूतं ममापि धैर्यम्।

अहो चित्रम्,

ब्रह्म सत्यं जगन्मिथ्या, भूयो भूयो विभावितम्।
सुतसंस्मृतिमात्रेण, तथाऽपि द्रवितं * मनः॥ ५२॥

सार०।—अपि कश्चिदस्मां स्तदीयवास्तविकवृत्तान्तकथनेन पुनरुज्जीवयेत्।

नेपथ्ये।—(ब्रह्मचारिस्वरेण) कुतस्तौ ?

उभौ।—(नेपथ्याभिमुखमवलोकयतः)

नेपथ्ये।—(पुनर्भिक्षुस्वरेण) इत एव निविड़कुन्दवृन्दावेष्टितविल्वान्तराले।

उभौ।—(विलोक्य) पश्य पश्य कश्चन समागच्छतीव ब्रह्मचारी तत्सहचरितश्चापरोऽपि भव्यवेषो भिक्षुक इव।

(ततः प्रविशतो यथोक्तावुभौ)

सारस्वतवेदमित्रौ।—नमस्कुर्वः।

ब्रह्मचा०।—अलमलम् भवन्तावेव तु प्रणमनीयौ यौ स्वकीयतपः

* द्रवशब्दादितच्।

प्रतापेनाऽखिलं विदर्भदेशगर्भं भूषयतः। (क्षणानन्तरम्) अपि प्रसीदतो भवन्तौ ?

वेद० ।—यद्यपि युष्मादृशानां ब्रह्मचर्यालङ्कृतदिनचर्याणां योगिनां कृपापात्रभूता न भवन्त्यप्रसादशङ्कयाऽप्यङ्किताः। तथापि ( इ-त्यर्द्धोक्ते विरमति )

ब्रह्म० ।—किमिव ?

सार० ।—कुशलिन एव श्रीमत् कृपया ।

ब्र० ।—नहि, सर्वं मनोगतं कथ्यताम ।

सार० ।—महात्मन्,

प्राणायामप्रवाहेण परिपूतहृदां सताम् ।
कस्य वा हृद्गतो भावो योगिनां स्यादगोचरः ॥ ५३ ॥

ब्र० ।—( भिक्षुकमभिवृत्य जनान्तिकम् ) अपि विलोकितं त्वया ए-तयोरौन्मनस्यम् ?

भि० ।—(जनान्तिकम्) विलोकितमिव, विलक्षण एष दूरस्थानामपि हृदाम् अवितर्क्यः सम्बन्धः । यतः—

दूरे सन्तमपि प्रेष्ठमनुस्मृत्यैव सर्वदा ।
स्वस्याविशुद्धं हृदयं दूयते च प्रसीदति ॥ ५४ ॥

वेद० ।—नेदीयांसमेव आश्रमं प्रविश्य स्वागतग्रहणेन सनाथनीया-वावाम् ।

ब्र० ।—अलं सत्कारव्यापारविशेषचिन्तया । श्रीमतोः सादरवचने-नैव सम्यक् सत्कृतोऽस्मि ।

सार० —इतः कं प्रदेशं स्ववियोगमलीमसमिव विधाय समायातः श्रीमान् ?

ब्र० ।—इतो विदर्भराजधानीत एव समागच्छामि ।

सार० ।—( सवेगम् ) विदर्भराजधानीतः ?

ब्र० ।—आम् ।

सार० ।—अप्यावयोः पुत्रयोरपि अवगतः कोऽपि वृत्तान्तः ?

ब्र० ।—अवगतः ।

वे० ।—अवगतः ?

ब्र० ।—आम् अवगतः ।

सा० ।—अपि तौ परावृत्तौ विदर्भनगरात् ?

ब्र० ।—परावृत्तौ मार्गे स्तः क्षणानन्तरमेव भवन्तौ तौ द्रक्ष्यतः ।

वे० ।—अपि कच्चित् कुशलिनौ ?

ब्र० ।—( अधोमुखः ) अथ किं कुशलिनावेव कथनीयौ ।

सार० ।—प्रभो अनया तु भङ्ग्या आहत इवाऽस्मि । विशकलय्य कथ्यताम् । अपि तौ कुशलिनौ ।

ब्र० ।—महर्षे क्षणानन्तरं सर्वं साक्षात् करिष्यसि ।

उभौ ।—नाथ तथाऽपि त्वरयति उत्कण्ठापरवशमस्मद्‌हृदयम् तत् कथ्यतां कृपया । जानीवो यदप्रियमाशंसितुं सतां चिराय खिद्यते हृदयं तथाऽपि प्रार्थनमिदमङ्गीकरणीयम् ।

ब्र० ।—तथाऽस्तु ( इति संक्षिप्य सर्वं कथयति )

सार० ।—( मध्यत एव क्रोधमुद्रां नाटयन् ) ( आकाशे दृष्टिं बद्ध्वा ) अरे रे क्षत्रियकुलकलङ्क ! अस्माकं हि ।

त्वया सोमदमत्तेन, दुःसंसर्गहतौजसा ।
कथं हन्त चिरात्सुप्तः, कोपसर्पः प्रबोधितः ॥ ५५ ॥

नेपथ्ये ।—( दूरत इव ) क्व विलम्बितमाचार्यचरणैः ?

आश्रमे समागतौ सामवत्सुमेधसौ ।

वेद० ।—अरे यज्ञदत्त ! सामवतीसुमेधसाविति कथय ।

नेपथ्ये (पुनः) ।—सत्यं सत्यं सामवतीसुमेधसौ तत् त्वरितमागम्यताम्

सार० ।—( पुनस्तथैव दृष्टिं बद्ध्वा ) अरे रे क्षत्रबन्धो,

मुनिपुत्रेस्वापलस्य, कोपस्याऽपि च मादृशाम् ।
त्वं एव द्रक्ष्यसि फलम्, मयि तत्र समागते ।

( इति समयोचिताचारमेकतः सारस्वतवेदमित्रौ अन्यतश्च ब्रह्मचारिभिक्षुकौ एवं सर्वे गच्छन्ति )

( जवनिकापातः )

( समाप्तोऽयं चतुर्थोऽङ्कः )

## पञ्चमाङ्कपात्राणि ।

१ खञ्जणकः } धीवरौ
२ झञ्झणकः }
३ अमात्यः
४ ब्रह्मचारी
५ राजा
६ मालतिका ] व्यजनहस्ता चेटी
७ प्रतीहारः
८ देवशर्मा
९ सारस्वतः
१० भगवती

# ( अथ पञ्चमोऽङ्कः )

( जवनिकापसारणम् )

( स्थानं नदी समयश्च आसन्नब्राह्ममुहूर्ता रजनी ) ( ततः प्रविशति नौकास्थो भिक्षुवेषोऽमात्यः क्षेपणीहस्तौ धीवरौ च )

धीवरौ ।—( क्षेपणीक्षेपणपुरस्सरं सहोहोकारं नौकावाहनं नाटयन्तौ आलपतः )

प्रथमः ।—*१ अलेले खंखणआ हगे किं वि गाअेमि ।

द्वितीयः ।—२ अले झंझणआ ता किं वि पुश्चसि ?

प्र० ।—३ अले शलाइं आलवत्ति ।

द्वि० ।—४ अले ले ( सहोहोकारं तरिं नयन् ) ता कीस ण आलवीअदि ?

प्र० ।—( उद्गारेण स्वरमिव सन्धाय स्वभङ्ग्या गायति )

५ एशा णोआ चलदि चलदि, एशा० ।

उभौ० ।—मश्चे विअ शलदि शलदि । एशा० ।

कीलदि कीलालभले, बल्-बल्-बल्-शद्दपले,

---

१ अरे रे खङ्खणक अहं किमपि गायामि ।

२ अरे झञ्झणक तत् किमिव पृच्छसि ?

३ अरे स्वरानालपेति ।

४ अरे रे । …… । तत् कस्मात् नालप्यते ?

५ एषा नौ स्खलति चलति । मत्स्य इव सरति सरति । ए० ।
क्रीडति कीलाल भरे, बल्-बल्-बल्-शब्द परे,
घल्-घल्-घल्-वाह धरे, तल्-तल्-तल् तरति तरति । ए० ।

---

* धीवरस्यातिनीचत्वात् मागधीभाषा यथाह द० रू० " पिशाचात्यन्तनीचादौ पैशाचं मागधं तथा " ।

घल्-घल्-घल्-वाहधले, तल्-तल्-तल्, तलदि तलदि। एग्रा० ॥१॥

( पौनःपुन्येन गायतः तरिवाहनं च नाटयतः )

प्र० ।—१ ( पूर्वदिशि वात्यामिव विभाव्य सक्षोभमुत्थाय ) अले अले ले ले ले !

द्वि० ।—२ ( तथैव सक्षोभम् ) अल्लल्लल् ले ! किं ले ?

अमा० ।—( अवलोक्य ) अरे क इव विक्षोभः !

उभौ० ।—३ पेस्कदु पेस्कदु भाअमिश्शे एशा वच्चा शमाशादिदा ।

( सविद्युच्चमत्कारं मेघो गर्ज्जति हलहलाशब्दश्च भवति )

अ० ।—( विलोक्य ) अरे कथं सत्यमेव झञ्झावातप्रयुक्तैर्मेघैर्व्याप्तमिव नभः ।

तथा हि,

गर्जन्मत्तमतङ्गाभिः, सेनाभिरिव कोटिशः ।

झञ्झावातः समायातो, घटाभिर्व्याप्नुवन् नभः ॥ २ ॥

( धीवराभिमुखम् ) अरे सतर्कौ भवतः ।

उभौ० ।—४ भाअमिश्शे शतक्के चिष्ठदु ( वात्यावातेन तरिविक्षोभं तरङ्गभङ्गमिव च विभाव्य ) ( क्षेपणीक्षेपं कर्णग्रहणमिव च विनाट्य ) अले ले। शतक्के होहि शतक्के ।

१ अरे अरे रे रे रे !

२* अरर्रे ! किं रे ?

३ प्रेक्षतां प्रेक्षतां भावमिश्रैः एषा वात्या समासादिता !

४ भावमिश्रः सतर्कस्तिष्ठतु ।......................। अरे रे। सतर्को भव सतर्कः !

* भयात् वर्णभङ्गो वीप्सा च ।

अमा०।—( परितो मेघगर्जनमिव विभाव्य ) अरे चैत्रेऽपिमेघाः! सत्यं दुर्दशासमये किं किं न भवति!

( ध्रुवपदं गायति मल्लारस्वरेण )

गर्ज गर्ज वारि वाह तर्ज तर्ज घोरराव भर्ज भर्ज
दीनहृदयमतिशयखरतर रे । गर्ज० ।
चारुचपलचपलाचयचन्द्रहास, विकटभास,
पर्वतसङ्काश, वारिविहतगगनचर रे। गर्ज० ॥
नीलपीतधूम्रकपिशहरितासितकर्बुरादि-
विविधरूपलसितललितमखण्डदलधर रे ।
वातपातघातविहतजलनिधिजलभङ्गवितत,
प्रबलवेगघट्टितबहुदिग्गजगणकर रे। गर्ज० ॥ ३ ॥

( तरङ्गविहतनौकान्दोलनेन पतन्निव )

अरे रे—आः—

उभौ०।—१ अले ले हदा तलणी।

अ०।—अरे किं सत्यमेव हता तरणिः? तटाभिमुखं गच्छत तटाभिमुखम्।

उभौ।—( सहोहो कारम् ) २ अन्धआले कहिं तडे?

अ०।—सत्यं महानन्धकारः। अहो कथमेवं विदर्भराज्ये महोपद्रवसन्तानवितानः तत्राऽपि ( स्वगतम् ) विशेष्य विदर्भराज्यस्य सूत्रधारभूतस्य ममोपरि—तथा हि।

राज्ञा साक्रोशमेवारुणिमयुतदृशा वीक्ष्य किञ्चिन्नियुक्तो
यातः सेनासमेतो वनजनसमरे प्राप्तवानऽस्मि भङ्गम् ॥

१ अरे रे हता तरणिः!
२ अन्धकारे क्व तटः?

भिक्षुभूतः कथंचिच्छलबलकलनैर्दूरमाप्तस्तरख्या,
झञ्झाबातप्रपातैः कठिनतरहतो हा हतो हा हतोऽहम् ॥ ४ ॥

( धीवराभिमुखम् ) अरे अपि नौका सहिष्यते सर्वं झञ्झावातचपेटाघातम् ।

उभौ ।—१ यदि ईश्शलो ल॒क्दि ! *

अ० ।—अहह तर्हि प्राप्तोऽयं समाप्तिसमयः । ( निःश्वस्य ) आः किमिव कृतं मया एतावता जीवनेन ? हा !

बाल्यं भीतिविषादमोहहसनैः क्रीडाहतौ रोदनैः,
व्यापारैर्नृपनीतिभिः खरतरैः संयापितं यौवनम् ।
अद्य श्वोऽथ हरिं भजाम्यकपटश्चेत्थं कटिं बध्नतो,
झञ्झावातमिषेण कोपकलुषः प्राप्तोऽन्तको घस्मरः ॥ ५ ॥

( अकस्मात् नौका निमज्जति † )

( पटीक्षेपः स्थानं नदीतटः पुलिनलग्नस्य चामात्यस्यार्द्धमूर्च्छितस्य प्रवेशः ) क्षणानन्तरं झञ्झादिशान्तिः प्रभातप्राया च

१ यदि ईश्वरो रक्षति

* मागधीभाषाया अप्रायिकत्वात् तत्साधकानि हैमचन्द्राणि सूत्राणि लिख्यन्ते । प्रा० व्या० अ० ८० पा० ४. सू० "अतएत्सौ पुंसि मागध्याम् ८६ रसोर्लशौ ८७ सषोः संयोगे सोऽग्रीष्मे ८८ टृष्टयोः स्टः ८९ स्थर्थयोः स्तः ९० जद्ययां यः ९१ न्यण्यज्ञञ्जां ञ्ञः ९२ व्रजेर्जः ९३ छस्यश्चोऽनादौ ९४ क्षस्य ≍कः ९५ स्कः प्रेक्षाचक्ष्योः ९६ तिष्ठश्चिष्ठः ९७ अवर्णाद्वा ङसो आहः ९८ आमो आहं वा ९९ अहं वयमोर्हगे ३०० शेषं शौरसेनीवत् ३०१ ।

† अत्राभिनेतृभिर्महता चातुर्येण नौकानिमज्जनं दर्शनीयम् । एवमेवाकाशगमनप्रवेशादिकम् ।

रजनी ) (ततः प्रविशति आकाशमार्गेण पूर्ववेषेण ब्रह्मचारी)

ब्रह्म० ।—( अमात्यं हस्ताभ्यां तटे आकृष्य ) अमात्य मूर्छां त्यज मूर्छां त्यज ( इति कस्याश्चिद् वीरुध इव पत्रं करेण संमर्द्य आघ्रापयति )

अ० ।—(मूर्छात्यागनाटनपुरस्सरमुत्थाय) आः कथं पुनर्जीवित इवाऽस्मि ?

ब्र० ।—स्थिरो भवत्वार्यः ।

अ० ।—(परिवृत्यावलोक्य) आः कथमिह योगिराजराजः श्रीमान् ? ( इति प्रणमति )

ब्र० ।—( उत्थाप्य ) आयुष्मन् अत्र भवत एव चेतनार्थमायातोऽस्मि तद् धार्यतां धैर्यम् उल्लाघानि विदधामि भवदङ्गानि (इति विभूत्या लिम्पति )

अ० ।—योगाचार्य युष्मादृशाः शुष्कं जीर्णस्थाणुमपि पल्लवयन्ति किं पुनरुज्जीवनं मादृशानाम् । ( क्षणानन्तरम् ) आर्य कथमीदृशी उपद्रवपरम्परा धर्मसिन्धुराज्येऽपि ?

ब्र० ।—अमात्य,

आचार्या मुनयस्सन्तो, विद्वांसश्च पतिव्रताः ।
वृद्धाः सीदन्ति यद्राज्ये, तत्र ज्ञेयं महद् भयम् ॥ ६ ॥

अ० ।—( स्वगतम् ) मन्ये सामवत्सुमेधस्सम्बन्धिनीयं कथा । (प्रकटम् ) आर्य तत्किं कोपि कोपितो विप्रः ?

ब्र० ।—( सङ्क्षिप्य सामवतीवृत्तान्तमाख्याय ) अमात्य ! आकलय्य चेमं वृत्तान्तं न केवलं सारस्वतवेदमित्रौ किन्तु सर्वेऽपि तपोवननिवासिनः परःसहस्रा ऋषयः प्रबलकोपकम्पमानाधराः शापेन दग्धुमिवारब्धवन्तो विदर्भनरेशम् ।

अ० ।—आस्ततस्ततः !

ब्र० ।—ततस्तु कृत्वेनाऽपि जातदयेन मया कथमऽपि निरुद्धो सुनिगणः । तथाऽपि सारस्वतस्तु अद्यैव राजसाक्षात्कारं करिष्यति को जानीते कया वा विधा आत्मनः कोपं शमयेदिति ।

अ० ।—( अञ्जलिं बद्ध्वा ) आर्य संयमिनीत इव प्रतिनिवृत्तोऽपि पुना राज्ञस्तु कुशलमेवाकाङ्क्षे ।

ब्र० ।—( स्वगतम् ) एनं किञ्चित् परीक्षे तावत् । ( प्रकटम् ) अमात्य "आत्मार्थे पृथिवीं त्यजेत्" तत् त्यज्यतामेष स्वकृतभुग् राजा सेव्यतां च मया सह यमुनातुङ्गतरङ्गभङ्गमङ्गलीकृता वृन्दारकवृन्दवन्दिता वृन्दावनभूमिः ।

अ० ।—( प्रणमन्निव साक्षेपम् ) आर्य सत्यमचिरादेव कृष्णजन्मभूमिरेणुनिचयविलुठनैरात्मानं पावयिष्यामि तथाऽपि विपन्नस्तं महाराजं तु आत्मनः शिरोदानेनाऽपि सुखयितुमिच्छामि किम्पुनरुद्योगैः ।

ब्र० ।—अमात्य चिरंजीव ( जटाजूटात् पुष्पमेकमाकृष्य ) इदं पुष्पं शिखायां बिभ्रता राज्ञा ऋषिर्द्रष्टव्यः ।

अ० ।—( प्रणम्य ) तथा ।

ब्र० ।—अधुना जातोऽयं प्रभातसमयः । यत्र—

विभाति भानुकिरणारुणीकृतशरीरयोः ।
सङ्कोचनविकासाभ्यां विभेदः कैरवाब्जयोः ॥ ७ ॥

किञ्च

भ्राजद्भास्वरभानुभानुनिकरैः शोणीकृते भूतले,
पाषाणः प्रविभाति रत्नवदयं रक्ताब्जवत् कैरवम् ।
मुक्तानां निकरः प्रवालसदृशो रौप्यं च ताम्रप्रभं,
लोहं तप्तमिवाऽवभाति सकलं सिन्दूरवत् कज्जलम् ॥ ८ ॥

तद्गच्छतु स्वभवनं, राजाऽपि कदाचित्सुप्तोत्थित आकारयेद् भवन्तम् ।

अ०।—योगिराज अहं तु दिशोऽपि न परिचिनोमि किं पुनः प्रदेशम् तत् कथमिव प्राप्नोमि विदर्भनगरीम् ?

व्र०।—अस्तु मामनुसर [ इति तमऽपि पादलेपेन सह नयन् आकाशमार्गेण याति ]

[ विष्कम्भकः ]

[ पटीक्षेपः स्थानं राजशयनशाला ]

[ प्रविशति च मालतिकया चामरेण वीज्यमानः सुप्तो राजा ]

नेपथ्ये।— उपसीद विराजितेऽप्ययं सरजस्कामपिपद्मिनीमिमाम्।
भ्रमरः परिचुम्बति स्फुटं किमकार्यं मधुपस्य विद्यते॥ ८॥
राजानमुत्थापयितुमिव गीतिः)

( भैरवीरागेण )

जाग्रहि जाग्रहि वीर नरेश।
धर्मकर्मबहुशर्मसभायुत, निजकुलकमलदिनेश॥ जाग्रहि०॥
किञ्चित् स्फुटितैः कमलकलापैर्निद्रां जहति सरांसि।
गुञ्जन्तो मञ्जुलमलिपुञ्जाः सपदि हरन्ति मनांसि॥ जा०॥
चण्डमरीचिचूड़ामणितां प्रागचलस्य दधाति।
कोकः शोकमोकमिव कुर्वन् निजकोकीमुपयाति॥ जा०॥
चलमधुकरजलजेन सदृशतां तव नयनं च दधातु।
रजनिजनितमन्थरतानिचयस्त्वामथ सपदि जहातु॥ जा० ८॥

राजा।—( चमत्कृत इव सविक्षोभमुत्थाय जृम्भमाण इव ) आः कथं मम घोरः स्वप्नः ? अथवा सतत्त्वमिव कोपि कोपकषायितलोचनः शपन्निव मां समायातो मुनिः। ( परितो विलोक्य ) मैवम् स्वप्न एवैषः—परन्तु अहह धड़त्करोतीव मे हृदयं अथ तावत् पश्यामि कानीव पत्राणि समायातानि। ( अवलोक्य ) मालतिके आनय यदि कानिचित् पत्राणि समायातानि

मा० ।—१ तह (इति निष्क्रम्य कतिपयपत्रहस्ता प्रविश्य च) एदा इं ( इति समर्पयति )

रा० ।—( पत्रावरणमपहरन्निव ) मालतिके ! उच्यतां प्रतीहारो यत् सपदि पुरोहितमानयेति ।

मा० ।—२ जं भट्टा आणवेदि ( इति निष्क्रान्ता )

रा० ।—( चिरं मनःकथाभिरेव पत्राण्यनवलोकयन्नेव तिष्ठति )

प्रतीहारः ।—३ ( प्रविश्य , जअदु जअदु भट्टा ।

रा० ।—( अवलोक्य ) अपि नवीनं किञ्चित् ?

प्र० ।—४ ( साञ्जलि ) तत्थ भवं पुरोहिदो दुआरे चिट्ठदि ।

रा० ।—प्रवेशय प्रवेशय सद्यः प्रवेशय ।

प्र० ।—५ तह ( इति प्रणमन् निर्गच्छति )

( ततः प्रविशति चन्दनमालादिभूषितः पुरोहितो देवशर्मा )

रा० ।—( प्रणम्योपवेश्य संक्षिप्य स्वप्नक्रुद्धमुनिदर्शनं कथयति )

दे० । महाराज यथार्थोऽयं स्वप्नः ।

रा० ।—यथार्थः ?

दे० ।—आम् यथार्थः । इतः प्रस्थितयोः सामवत्सुमेधसोर्वृत्तान्तो विशिष्य महाराजेन न ज्ञात इति मन्ये ।

रा० ।—अस्ति वा कश्चिद् विशेषः ।

दे० ।—महाराजार्थं भयानकश्च ।

रा० ।—आर्य विशकलय्य कथ्यताम् ।

दे० ।—( सङ्क्षिप्य सामवतः स्त्रीभावहृत्तान्तं कथयति )

रा० ।—कष्टं भोः । ततः ।

---

१ तथा । एतानि । २ यद् भर्त्ता आज्ञापयति । ३ जयतु जयतु भर्ता । ४ तत्र भवान् पुरोहितो द्वारे तिष्ठति । ५ तथा ।

दे०।—ततः किम्? द्वितीयः परशुराम इव राजकुले क्रुद्धः क्षारस्व-तीमुनिरद्यैव स्वकीयं कोपं सफलं कर्तुमुद्यायास्यति।

रा०।—(भीत इव) आर्य रक्ष रक्ष। (इति पादयोः पतति)

दे०।—(उत्थाप्य) महाराज यद्यपि,

रुरुदिषति जनो यो भ्रष्टभाग्यप्रभावः,
पिपतिषति पदाद् यः पूजनीयात् परोक्षात्।
जिगमिषति च दीनो दुर्गतिं दुःखदात्रीम्,
जगति स हि मनुष्यः कोपयत्याशु विप्रान्॥ ६॥
तथाऽपि धारय धैर्यम्,

रा०।—आज्ञाप्यताम्।

दे०।—अहं मन्त्रमेकम् उपदिशामि येन सभक्तिभावस्तवपूजादिक-मुच्चारितेन झटित्येव देवी प्रकटीभूय वरैश्छन्दयति।

रा०।—एषोऽहमवहितोऽस्मि। उपदिश्यताम्।

दे०।—महाराज अहमधुनैवास्मादुद्यानात् कानिचिद् दूर्वाङ्कुराणि बिल्वपत्रकुशांश्चादायाऽगच्छामि तावदनुष्ठाय स्नानान्तं कर्म सज्जास्तिष्ठन्तु प्रभवः (इति निष्क्रामति)

रा०।—तथा [इति गच्छन् प्रतिनिवृत्य] कथं पत्राणां तत्त्वं नावधारितमेव (गणयित्वा) केवलं द्वे पत्रे, (एकं प्रसार्य) कस्येदं (निपुणमवलोक्य) आः तस्यैव सेनापतेः। तत्किम्? सेना तु इतो गता स्वयमेव चामात्येन नीता पुनः किमेष लिखति? पठामि तावत्। (पठति)

"अखण्डप्रतापेषु खण्डितारिमण्डलेषु निष्कृपकृपाणपाणिषु तत्रभवत्सु श्रीमन्महाराजाधिराजेषु श्रीविदर्भपरिवृढेषु सेनापतिपदप्राप्तपूर्णप्रतिष्ठः शत्रुघातननामधेयः प्रणम्य निवेदयति, यत्, इतोऽपि अपरसेनया नाऽहं योजितोऽस्मि इति

भटकतिपयमात्रसहायो न शक्नोमि प्रत्यर्थिनः परिभवितुं, वन्यैस्त्वद्यैव रात्रौ चौरैरिवागत्यास्माकं शिबिराण्यग्निसात्कृतानि । तत्किं पूर्वप्रेषितपत्त्रमेव प्रभुभिर्नापि, तैनैव वा न प्रैषि, सैनिकैर्मार्ग एव वा व्यस्मारि, वन्यैरेव वा तत्समूहः समसारि, किमिव सञ्जातमिति तु विशकलय्य नावधारयितुं पारयामि; तदत्र यथोचितानुष्ठाने प्रभुपादा एव प्रमाणम् "

[ सशोकम् ] आः अहमपि तु अवधारयितुं न पारयामि किं जातमिति । [ आकाशे दृष्टिं बद्ध्वा ] अमात्य सर्वतोऽनिष्टमेव शृणोमि तत्किं त्वमपि तदेवोत्तेजयिष्यसि ?

अथ पश्चास्यन्यत् पत्त्रम् । [ प्रसार्य ] कस्यैतत् ? अहो अमात्यस्य ? सुष्ठु सुष्ठु । पठामि तावत् । ( इति पठति )

" विदितमस्तु सकलसामन्तमण्डलीमुकुटमणिनीराजितचरणानां परःकोटिश्रीसंवलितानां तत्र भवतां विदर्भनरेशानां यदऽद्याऽहं यथा देशं सेना नयन् मार्गे एव लुण्ठकप्रायैरसंख्यैर्वन्यैर्विलुण्ठ्य, हतशेषेषु भटेषु इतस्ततः पलायितेषु निगृह्य हन्तुमारब्धः । " ( स्वगतम् ) अहह !!! अथ पश्यामि ततस्ततः ( पुनः पत्त्रम् ) " अथाहमपि कथमपि तद्धस्तान्मुक्तो भिक्षुवेषं विधाय आच्छन्न एव विदर्भं चलितोऽस्मि " ( स्वगतम् ) दिष्ट्या कुशलम् [ पुनः पत्त्रम् ] " जीविष्यामि चेदचिरादेव देवं साक्षात् करिष्यामि । इति । किमधिकं निवेदयेत् हतभाग्यः श्रीमदमात्यपदविडम्बनः श्रीकान्तनामा । "

( किञ्चिद् विचार्य ) कः कोऽत्र भोः ?

प्रतीहारः ।—( प्रविश्य ) १ आणवेदु देओ ।

---

१ आज्ञापयतु देवः ।

राजा ।—यदि अमात्यश्रोकान्ल: स्वभवने वर्त्तेत तत् ससूचनीयो यच्छीघ्रमेवाऽहं तं दिदृचे इति ।

प्र० ।—१तह ( इति शिरसाऽऽज्ञां गृहीत्वेव गच्छति )

देव० ।—( प्रविश्य ) कथमवाधुनाप्यत्रैव देव: ?

रा० ।—आर्य आसमत्यावश्यककार्यै: प्रतिबद्ध: तदुपविश्यतां यावत् झटिति आगच्छामि । ( इति निष्क्रामति )

दे० ।—( उपविश्य दूर्वाकुशाङ्कुराणि छिनत्ति चिनोति च )

[ तत: प्रविशति स्ववेषेण जागरमन्यरोऽमात्य: ]

अ० ।—[ प्रणमति )

दे० ।—( साभ्युत्थानं साशिषं च उपवेशयति )

अ० ।—क इव विशेषविधि: !

दे० ।—मन्ये विदितमखिलमार्याणां तदुपद्रवविशेषशान्त्यर्थं महाराजं कञ्चिद् देवीसमाराधनविधिमुपदेक्ष्यामि ।

अ० ।—कृपासिन्धो निखिलमवगतं तत्राऽत्र विलम्बनीयम् ।

दे० ।—एष समायाति महाराज: ।

( चणानन्तरं सपदि स्नातस्येव महाराजस्य प्रवेश: । अनयोरुत्थानं सहर्षं महाराजस्यामात्यं प्रति कुशलपृच्छा कोणे समाहूय कर्णेकर्णे चणमालापश्च )

दे० ।—इतस्तावदायुष्मान् ।

रा० ।—( पुरोहितनिर्दिष्टे कुशासने उपविशति )

दे० ।—( तदङ्गरचादिकं विधाय संचिप्तविधिना कर्णे कञ्चिन्मन्त्रमिवोपदिश्य ) राजन् यथाऽवसरमनेनैव मन्त्रेण समाराधनीया देवी ।

रा० ।—( पादयो: पतति )

१ तथा ।

दे०।—( आशिषो वदति )

नेपथ्ये।—( सारस्वतस्वरेण )

अरे रे,

भूताः प्रेताः पिशाचा नवरुधिरलवा, डाकिनीपूतनाद्याः,

आयातायात शीघ्रं चपलित रसनाः, स्वस्वपात्रं गृहीत्वा।

वीक्षध्वं श्रीमदान्धान् [मदनपरवशानेष सारस्वताख्यो,

राजन्यानद्य हन्तुं प्रचलति कुपितो, जामदग्न्यो द्वितीयः ॥१०॥

( सर्वे बिभ्यति )

अमा०।—( पटान्तात्पुष्पमुन्मोच्य ) इदं योगिदत्तं पुष्पं शिखायां धारयत्वायुष्मान् श्रेयस्करमेतत्।

नेपथ्ये।—( तेनैवस्वरेण निकटत इव )

पश्यतभोः पश्यत,

* जनकी दुर्नयं दृष्ट्वा भार्गवेण हता नृपाः।

विलोक्य पुत्रे दुर्नीतिं हन्ति सारस्वतो नृपान् ॥ ११ ॥

रा० ( सभयम् ) पुरोहित रक्ष रक्ष।

दे०।—धीर एधि धीर एधि। तमेव मन्त्रं मनसा जप।

[ ततः प्रविशति भयभ्रान्तः प्रतीहारः ]

प्र०।—१ महाराअ दुब्बासा दुब्बासा दुआरे।

अ०।—अरे नैष दुर्वासास्तथाऽपि प्रवेशय तावत्। (प्रतीहारे निष्क्रान्ते झटिति प्रविशति क्रुद्धः सारस्वतः)

---

१ महाराज दुर्वासा दुर्वासा द्वारे।

---

* जनकी जमदग्नौ दुर्नयं हैहयकृतमपराधं दृष्ट्वा अवलोक्य भार्गवेण परशुरामेण नृपाः क्षत्रियाः हता मारिताः। इयं कथा पुराणेषु अति प्रसिद्धा। हन्ति हनिष्यति सुज्ञेयमुत्तरार्द्धम्।

सा०।—कतमोऽत्र राजपदविडम्बनः ?

रा०।—( पादयोः पतति )

सा०।—अरे रे धूर्त्तराज ! दूरतो भव !

( इति क्रोधेन दृष्टिं बद्ध्वेव तिष्ठति )

दे०।—( अञ्जलिं बद्ध्वा ) महात्मन् चम्यतां चम्यताम् । *

सा०।—( सामर्षम् ) देवशर्मन् ! त्वमपि—

‡ चाटुवाक्यैः प्रसाद्यन्ते यस्मिन् पापा मदान्विताः ।
पौरोहित्यं गृहीत्वा तद् गतोऽसि ब्रह्मबन्धुताम् ॥ १२ ॥

दे०।—तूष्णीं भुवमवलोकयन् तिष्ठति )

सा०।—( सक्रोधशोकम् ) आः एक एव तु मम कुलाधारः पुत्रः, सोप्येतस्य कौतुकिनो राजबन्धोः संसर्गादाचारशून्यं क्लीवमाप्तः । अह ह

* कुलारविन्दमित्रेण पुत्रेण रहितास्तु ये ।
क्लिश्यन्ति पितरस्तेषां लुप्तपिण्डोदकक्रियाः । १३ ॥

क एतन्न जानीते यत्,

यस्मिन् विन्यस्य भारं निखिलमपि जना धन्यतामाप्नुवन्ति,
वार्द्धक्यं चाऽपि विष्णोर्भजनमननतः सादरं यापयन्ति ।
यस्मात् सर्वे प्रसादं दधति च पितरः शस्यतां याति वंशः,
सोऽयं पुत्त्राभिधानो जगति विरचितः कीर्त्तिदाता विधात्रा ॥१४॥

परमहह अनेन दुराचारेणाहमपुत्रतां नीतः

---

* कुलारविन्दमित्रेण = कुलकमलसूर्येण = कुलोल्लासहेतुना इति यावत् । पुतो नरकात् त्रायते इति पुत्त्रः । अत्र तद्द्वयं न तु एकस्तकारः ।

‡ ब्रह्मबन्धुताम् ब्राह्मणाधमताम् ।

तत् कथं मे शोकविमोको भवेत्! (क्षणानन्तरम्)
अथवा किमवीरसुन्दरीवद् विलपामि अमुं कुलकलङ्कं
भस्मसात्कृत्य हृदयविक्षोभं शमयामि । (कमण्डलो-
र्जलमिव चुलुके कुर्वन्) शृणुत भोः शृणुत—

* भो भोः क्षत्रियबान्धवा धनमदोन्मत्ता महामानिनो
नाहं भार्गववत् पुनः परशुना छेत्स्यामि युष्मान् रणे ।
हुङ्कारेण हि कोपपावकभरे हुत्वाऽद्य हव्यं यथा,
शेषैस्त्र्यायुषमुद्रयेव भसितैरङ्गानि सम्मर्दये ॥ १५ ॥

म० ।—(प्रणमन्) प्रभो धैर्यं धैर्यम् ।

सा० ।—अमात्य स्त्रीभूते यथाऽवस्थिते पुत्रे कुतो धैर्यम् ।

रा० ।—(साञ्जलि) प्रभो तस्य पुनःपुम्भावार्थमधुनैवाराध्यते देवी
मुहूर्त्तं धैर्यं धारयतु प्रभुः ।

सा० ।—अस्तु आराधय, पश्यामि तव देवीभक्तिमपि ।

रा० ।—तथा । (इति परिक्रामति)

(पटीक्षेपः पूजनादिसामग्रीसम्बलितो भूभागः)

रा० ।—(निर्दिशन्) इत उपविशत्वार्यः ।

---

* यतो धनमदोन्मत्ता यतश्च नृपंमानिनः अत एव क्षत्रियबा-न्धवा इति हेतुभूतं विशेषणम् । अहं परशुराम इव युद्धा महता-ऽऽयासेन युष्मान् न शमयिष्यामि किन्तु हुङ्कारमात्रेण दग्ध्वा भ-स्मभिरपि अङ्गलेपं विधास्यामि इति तात्पर्यम् । एतेन भस्मापि कुशलेन न स्थास्यतीति ध्वनितम् । हवनान्ते "त्र्यायुषं जमद-ग्ने" रिति मन्त्रेण ललाटादौ भस्म लिप्यते सैव त्र्यायुषमुद्रा । किं भविष्यत्कालसूचनेन अस्मिन् एवक्षणे हन्मि इति बुबोधयि-षया सम्मर्दये इति लट् ।

सा० ।—( कूर्चं परिमृजन् उपविशति )

रा० ।—सर्वैः सह उपविश्य अङ्गन्यासकरन्यासजपादीन् विनाव्य नेत्रे संमील्य ध्यायन् स्तौति )

* भक्तजनहृदयसम्पुट, पिहितं प्रेम्णः पटेन वृतम् ।
बालरविच्छवि वन्दे, पदमाणिक्यं तु पार्वत्याः ॥ १६ ॥

‡ चन्दनलेपनरुचिरं, चिरं, महायोगिभिर्ध्यातम् ।
मां कृतपापाचरणं, चरणं तत् पातु पार्वत्याः ॥ १७ ॥

† संसारजलधिशोषणचतुरा यमदूतनयनमुषः ।
स्वच्छीकृतहृन्मुकुरा, गिरिजापदपांशवः पान्तु ॥ १८ ॥

अयि मातर्जगदम्बिके कमलनयनस्य कमलनाभस्य महिममहत्वदायिनी कमला नाम्नी त्वमेवाऽसि । जगद्गुरोः सागरोद्गीर्णगरिष्ठगरलगिरणस्य रिङ्गद्गङ्गातरङ्गभङ्गरङ्गसङ्गलसदुत्तमाङ्गस्य गिरिशस्य गौरवविधात्री गौरी च त्वमेव । त्वमेव च महिषमहिषीभूषणमोषणविधायिनी । त्वमेव चातिप्रचण्डकोदण्डमण्डितभुजदण्डचण्डमुण्डखण्डनकारिणी दुर्दण्डदैत्याखण्डलमुण्डकुण्डलमण्डलमण्डितगण्डयुगा चामुण्डा ।

---

* माणिक्यं हि अरुणं भवति पटेन परिवेष्ट्य सम्पुटे च स्थाप्यते अस्ति चेदमपि तादृक् । रूपकालङ्कारः ।

‡ अत्र चिरं चिरं चरणं चरणमिति सिंहावलोकनयमकम् ।

† साधारणतो रेणूनां जलशोषणं, चक्षुर्मोषणं, दर्पणनिर्मलीकरणं च धर्मः, गिरिजापदपांशुष्वपि तदेव घटयन्नाह संसारेति । भवाम्भोधिशोषणे दक्षाः, कृतान्तभटलोचनहराः, विहितान्तःकरणदर्पणप्रकाशाश्च भगवतीचरणरेणवः अस्मान् रक्षन्तु ।

अतो भवती,

* या तु यातुदलनाशकारिका, कालिकाऽलिकचभासिता सिता
तारितारिनिवहा सुखावहा, पातु पातु जगदम्बिकाविका १९

अहह,

कीर्णदुःखविभवे भवे नरो, नास्ति हन्त सुमना मनागपि ।
चेद् भजेत् क्षणमहो महो-युतां, तस्य नेन्द्रपदवी दवीयसी ॥२०॥

भवती किल नितान्तदन्तुरितदैत्यदन्तावलदन्तनिकृन्तन-
करालकरवालव्यालव्यालसत्करा कालिका । कालिकेव ⁑
च शरासारशमितदुरन्तदानवदीर्घदुःखा, चञ्चलीकृतविद्युद्वि-
निन्दकद्युतिद्योतितरसना, परितोषितवर्हिर्मुखवर्हिणा, नि-
स्तन्द्रमाच्छादितदितिजयशश्चन्द्रा, च ।

भवत्यास्तु चरणयुगे,

चन्द्रचारुनखराजिचन्द्रिरे, कोमले कमलकान्तिमन्दिरे ।
चित्तमस्तु चिरमूर्जितेन्द्रिरे, यद्धि देवनिवहा ववन्दिरे ॥ २१ ॥

(इति प्रेमपरवशो रोमाञ्चितः साष्टाङ्गं भूमौ पतित्वा प्रणमति)

† (ततः सतेजःपुञ्जप्रचारमाविर्भवति जगदम्बिका, अमा-
त्यादयश्च सजयध्वनि बद्धाञ्जलय उत्तिष्ठन्ति ।

---

* यातुदलनाशकारिका, रक्षः समूहध्वंसविधायिनी, अलिनि-
भैः कचैर्भासिता शोभिता, सिता गौरी, तारितशत्रुसमूहा "समर-
मूर्द्धनि तेऽपि हत्वा । नीता दिवम्" इति सप्तशती, सुखदात्री, अ-
विका रक्षिका जगदम्बिका पातु पातु "दुःखितो व्याकुलश्चैव
चकितश्च कृतादरः । वीप्सया भाषते प्रायः परांश्चोन्मुखयन् जनः"

⁑ मेघ जालेऽपि कालिकेत्यमरः वर्हिर्मुखाःक्रतुभुजः, मयूरो
वर्हिणो वर्हीति च अमरः ।

† अत्र महच्चातुर्यमपेक्षितमभिनेतॄणाम् ।

भगवती।—उत्तिष्ठ वत्स उत्तिष्ठ।

राजा।—(किञ्चिदुत्तिष्ठन् भगवतीं साक्षात्कृत्य पुनर्निपतति)

भ०।—वत्स उत्तिष्ठ वरं ब्रूहि।

रा०।—(सर्वेषु बद्धाञ्जलिषु भगवती दर्शनानन्दमनुभवत्सु उत्थाय) अम्ब किमन्यत्।

मदीयचापलात् किंवा स्वीयादृष्टप्रभावतः

सारस्वतमुनेः पुत्रः स्वोत्वमाप्तोऽस्मि सम्प्रति ॥ २२ ॥

तत्,

स बिभर्तु पुनः पौंस्त्वं यथा सारस्वतो मुनिः ।

अपुत्रतातिविकलो भस्मसान्न करोति माम् ॥ २३ ॥

भगव०।—(गम्भीरस्वरेण) वत्स अन्यत् किमपि याचस्व, यतो नाहं मम निष्कपटभक्ताया धन्यमान्यसीमन्तिन्या विचेष्टितस्य व्यत्यासं कर्त्तुं पारयामि। अस्मि हि वशंवदा भक्तिमताम्।

रा०।—(किञ्चिद् विचार्य सारस्वतमुखमवलोक्य) अम्ब तत् कथमपि तोषणीयोऽत्रभवान् सारस्वतो मुनिवरो यथा न वयमेतस्य कोपज्वालाजालस्य पतङ्गतां गच्छामः।

भ०।—तन्मा भैषीः दत्तं तेऽभयम्।

रा०।—जीवितोऽस्मि (इति प्रणमति)

भ०।—अस्ति अन्यदऽपि किञ्चिद् वरणीयम्।

रा०।—अस्ति।

तथा मे हृदयं स्वच्छं विधेहि जगदम्बिके ।

किमप्यऽनुचितं कर्म यथा न विदधाम्यहम् ॥ २४ ॥

किञ्च मम राज्ये

प्रसीदन्तु प्रजाः पूर्णं, दयन्तां देवता द्विजाः ।

वसुधा वसुदा भूयात्, शस्यं सस्यं च जायताम् ॥ २५ ॥

इति

भ० ।—तथाऽस्तु ।

रा० ।—जय जननि जय जय जय ( इति प्रणमति )

सा० ।—( सर्वैः सह सोद्घोषं जयध्वनिं करोति )

भ० ।—( तमऽभिमुखीभूय ) मुने तवाऽपि तीव्रेण तपसाऽहमतितरां तुष्टाऽस्मि ।

सा० ।—सफलितं मम तपःकष्टेन ।

भ० ।—तत् किञ्चन हितं कथयामि ।

सा० ।—अनुगृह्णातु जगदम्बिका ।

भ० ।—त्वमऽधुना सुपुत्रस्य सामवतः क्षोभात्मामाकलय्य अत्यन्तं विकलोऽसि ।

सा० ।—आम् ।

भ० ।—सत्यं सुपुत्रवियोगो भवत्येव दुःखदः । परन्तु त्वादृशानां मुनिवर्याणां न शोभत एषा विकलता । तत्रापि क्रूरं कुपितोऽस्यस्मिन् दीने विदर्भनरेशे ।

सा० ।— ( कन्धरं नमयति )

भ० ।— किं सर्वस्या अप्येतस्या घटनायाः केवलमेक एष एवास्ति कारणम् ? किं न जानाऽसि यत् सर्वोजनः सितमसितं वा स्वकृतमेव भुङ्क्ते ? न स्मरसि सामवतो जन्मसमये एव किमुक्तं दैवज्ञैः ? न वा स्मरसि एतद्यात्रासमये एव कानि दुःशकुनानि त्वया अवलोकितानि ? ज्ञानदृशा वा नावधारयसि यत् सामवान् दुर्वाससाऽपि शप्तः !

सा० ।— ( साश्चर्यं संस्मृत्येव दुःखमुद्रां नाटयति )

भ० ।—न वा विलोकयसि यत् कलिना तत्सैनिकभटायितैरपरैर्भूतादिभिश्च व्याप्ता राजसभा !

( राजा अमात्यदेवशर्माणौ च आश्चर्यं कलयन्तः परस्परमवलोकयन्ति )

भ०।—अस्ति किल राज्ञोऽपि दोषः परन्तु तस्य महान् दण्डोऽप्येतेन प्राप्तो यस्त्वयैव परीक्षदर्शिन्या दृष्टः साक्षात्कर्तुं शक्यते तदधुनाऽलमस्मिंस्तव कोपेन केवलमपुत्रता त्वां दुःखाकरोति, तद् वरं ते ददामि यदचिरादेव पूर्वस्मादपूर्वं गुणगरिष्ठं कञ्चिदपरं पुत्रं प्राप्स्यसि ।

सा०।—( किञ्चित् प्रणमति )

भ०।—❋ यं हि, चन्द्रमिव कलाधरं, रविमिवविलसच्छायम्, कैलासमिव पूज्योपलसितम्, इन्द्रमिव सन्तानमालाधारिणम् तपोवनमिव सर्वदारूपशोभितम्, गरुड़मिव विनतानन्ददायिनम्, रसनाग्रमिव च द्विजमण्डलीमध्यवर्त्तिनम्, अवलोक्य स्वसितमण्डलीसहितश्चिरं प्रसादमासादयिष्यसि। इतश्च सुमेधसं सामवत्याः पाणिं ग्राहयन् अर्जय किञ्चिद्विलक्षणं पुण्यम्।

सा०।—( स्वीकारमुद्रां कलयति )

भ०।—सारस्वत अतितरां कृतपुण्योसि यस्य तव सामवती दुहिता सुमेधाश्च जामाता। तद् गच्छ अनुतिष्ठ यथादिष्टम्।

सा०।—शिरसा वहामि जगज्जनन्या आदेशम्। ( इति सजयध्वनि साष्टाङ्गं प्रणमति )

( सर्वे सपुष्पवृष्टि जयध्वनिं कुर्वन्ति। भगवती अन्तर्दधाति ( पुनः सर्वे सजयध्वनिं प्रणमन्ति )

रा०।—(क्षणानन्तरम् उत्थाय सारस्वतस्य पादयोः पतति )

---

❋ कलाः षोड़श, चतुःषष्टि च। छाया कान्तिः, प्रभा च। पूज्योपलसितम् पूज्यैरुपलसितम् पूज्योपलैः सितं च। सन्तानमाला सन्ततिमाला, सुरतरुमाला च। सर्वदारूपशोभितम् सर्वदा रूपेण शोभितम, सर्वदारुभिरुपशोभितं च। विनता नम्राः, गरुड़माता च। द्विजा ब्राह्मणादयो दन्ताश्च। शेषं स्पष्टम्।

दे०।—मुनिवर्य अधुना क्षम्यन्तामऽपराधाः श्रीमतो महाराजस्य

सा०।—राजन्नुत्तिष्ठोत्तिष्ठ। क्षान्ता एव भवतोऽपराधा भगवत्या कस्त्वाऽहं वराकः। तत्राऽपि धन्यमहं वदामि भवन्तं येनाऽहमपि देवीदर्शनेन सफलजन्मा कृतः।

ध०।—आशीर्भिरभियोजनीयोऽधुना श्रीमान्।

सा०।—सततमाशिषो वदिष्यामि किन्तु राजन् इतोऽपि जागृहि सम्पत्तिमदिराप्रभूतप्रसृतनिद्रां विद्रावय, निरीक्षणपत्नीभिः साकमुपहासो भवति न च पुनर्विद्वद्भिः। इतस्तु परं त्वया कदाऽपि विप्रा न कोपनीयाः।

रा०।—मुनिवर्य भ्रान्तेन विषं भुज्येत न तु ज्ञाततत्प्रभावेणापि।

सा०।—अस्तु इतश्च,

वैरिव्रातविमर्द्दनं नु विदधत् पूर्णं प्रजाः पालयन्,
दुष्कीर्तिं दलयन् यशश्च कलयन् दुर्गाणि निर्मापयन्॥
वेदार्थं च विदन् द्विजानथ नमन् गोविन्दमभ्यर्चयन्,
आचारेण मुनीन् जयन् नरपते क्षोणीमिमां पालय॥ २६॥

रा०।—(प्रणमति)

सा०।—अथाऽहमपि सामवत्या विवाहकार्याणि चिन्तयामि। सर्वे विदन्ति भवन्तो यत्

विवाहादिककार्येषु चिन्तासम्भारदायिका।
जनन्या जनकस्यापि दारिका दारिका हृदः॥ २७॥

रा०।—प्रभो अलं चिन्तासन्तानवितानेन। सेवक एष प्रेषयत्यखिलं सामग्रीजातम्। सपद्यनुष्ठीयतां वैवाहिकोत्सवः। सदैव चायं यज्ञादिसमये आज्ञादानैः सनाथनीयो जनः।

सा०।—साधु राजन् धर्मधीरसि। राजसाहाय्यमन्तरा कथमऽस्माकं पट्टाम्बरायितवल्कलानां, मुद्रिकायितदर्भपत्राणां, मुकुटा-

यितजटानां, मन्दिरायितपर्णकुटीनां, तूलिकायितवृषीणां, † बहुद्रविणसाध्यानि यज्ञादीनि सिद्ध्येयुः अतो भवतु भवाञ्छुभंयुः मा भूत् कदाप्यहंयुः ‡ मा च भूद् हतशत्रोर्भवतः केनापि सहाहमहमिका। गच्छाम्यहमधुना विवाहकार्यं निर्वर्त्तयितुम्। ( इति सर्वेषु प्रणमत्सु निष्क्रान्तः )

रा०।—( क्षणानन्तरम् ) (पुरोहितस्य पादयोर्निपत्य) प्रभो रक्षितोऽहं भवता।

दे०।—महाराज रक्षितोऽस्ति भवानऽविचलया भक्त्या यतः

सिद्धिमार्गास्तु विविधाः सन्ति शास्त्रेषु कोटिशः।
ध्यानेन रहितं स्वान्तं यस्य स्यात् स हि सिद्धियुक् ॥ २८॥

रा०।—( अमात्याभिमुखम् ) आर्य अमात्य सपदि प्रेषणीया सामग्री सारस्वताश्रमम् महानुपद्रवो निरस्त इत्यस्माभिरपि सोत्सवैर्गोविन्दः पूजनीयः।

( अमात्यपुरोहितौ ) आयुष्मन् साधयामः।

( इति सर्वे निष्क्रान्ताः )

( जवनिकापातः )

## ( समाप्तःपञ्चमोऽङ्कः )

---

## षष्ठाङ्क पात्राणि।

| | |
|---|---|
| १ भिक्षुकः। | ६ वेदमित्रः। |
| २ सुमेधाः। | ७ सारस्वतः। |
| ३ बन्धुजीवः। | ८ विप्राः। |
| ४ सामवती। | ९ परीवारः। |
| ५ मधुरवचना (सामवत्याःसखी) | |

---

† "ऋषीणामासनं वृषी" इत्यमरः।

‡ "अहङ्कारवानहंयुः शुभंयुस्तु शुभान्वित" इत्यमरः।

# षष्ठोऽङ्कः ।

( जवनिकापसारणम् )

( स्थानं बिल्ववनम् )

* नेपथ्ये ।—गत्वा राजगृहं सशोक दहनः प्रोद्बुद्ध कोपो मुनि,
स्वल्प सेवितचण्डिकार्पितवरं सम्प्राप्य सत्युवदम् ।
राज्ञा चानतकन्धरेण सुतरां रुष्यार्थिस्तोषितः,
सज्जः सामवतीविवाहरचने सारस्वतो यात्यऽसौ ॥ १ ॥

( ततः प्रविशति पूर्ववत् कलिततुम्बोपात्रो भिक्षुकः )

भि० ।—( नेपथ्याभिमुखमवलोक्य ) सत्यं सत्यं मयाऽपि श्रुतं यत्, सिन्दूरद्रवस्नातखञ्जनायमाननेत्रयुगो, विजृम्भमाणकोपः, स्फूर्जद्धूर्जटिसङ्काशो महामुनिसारस्वतो विदर्भराजमाससाद सोऽपि च पुरो हितं कथयता पुरोहितेन समुपदिष्टः सामवत्याः पुनः पौञ्चावाप्त्यऽर्थमङ्गीकृतसकलनियमः समाहितमना भगवतीं जगदम्बिकामाराधयाम्बभूव, ततश्च तत्सेवनपरितुष्टा चण्डिका स्वकीयं, विभाविभासितदशदिशं देवराजमुकुटमणिगणनिचयनीराजितं, मुनिजनमानसहंसमानसं, जनमनोवाञ्छितपूरणकल्पपादपम्, ध्यानधिष्ण्यं, दिव्यं रूपं प्रकटीकृत्य मुदिरारसितपरिस्पर्द्धि गाम्भीर्येण मधुरस्वरेण पीयूषमिव वर्षन्ती चिन्तासन्तापक्लान्तजीवजीवनजीवातुरसमिवोज्जृम्भन्ती मुनिकोपानलप्रयुक्तभस्मीभावभयभीतविदर्भराजशोकोच्चाटनमन्त्रमिव जपन्ती बहुवरदाने राजानमजीवयत् । यस्याऽयं निष्कर्षो यत्, सामवती सुमेधःपाणिपीडनसुखं कलयिष्यति सारस्वतश्च कञ्चिद्वरं ततोऽपि बहुतरप्रशंसापात्रम् पुत्रमा-

---

* इयं चूलिका यथाह धनंजयः " अन्तर्जवनिकासंस्थैश्चूलिकार्थस्य सूचिका "

प्स्यतीति। तदेवं विगतकोपरयः सारस्वतमुनिः स्वमाश्रममायातीति। (विचार्य) अस्तु अहमपि तत्रैवाद्य पवित्रां भिक्षां भोक्ष्ये अहो सर्वं भव्यमेव जातम्। इत एषा सुमेधसा चिरं वञ्चिता सामवत्यऽपि मदनमर्दिता विरहेणोष्णं निःश्वसिति, ततश्चैव सामवती समाश्लेषप्रार्थनाद्युपद्रवजागरितमनोसिजः सुमेधा अपि गच्छंस्तिष्ठन् वदन् स्वपंस्तामेव चिन्तयति, तदेवमेनौ प्रणयपूरेण पूर्वमेव कृतमानसपरिणयौ यदि साक्षादऽपि कलयेतां विवाहसुखं तत्त्विमधिकं मङ्गलमाशासनीयम्॥ (परिक्रम्यावलोक्य) अथ सुनेनामाश्रमेष्वेव किञ्चिद् भिक्षे तावत् (इति "किमपि तु" इत्यादि गायन् निर्गच्छति)

(विष्कम्भकः)

(ततः प्रविशति पुष्पावचयं नाटयन् बन्धुजीवेनानुगम्यमानः सुमेधाः)

(सुमेधाः)—(स्वगतम्) अहह परःशतव्याजैर्विस्मृतापि सा तु न त्यजति मदीयं हृदयम्। (निःश्वस्य) हा

अद्याऽपि सा मदिरमेदुरमञ्जुनेत्रा,
खेदाऽक्तकण्टकितकान्तकपोलपालिः।
चेतःस्थिताऽप्यहह मे पुरतो गतेव,
कण्ठग्रहाग्रहपरा हृदयं दुनोति॥ २॥

(पुष्पावचयनात् निवृत्तेव हा चन्द्र मुखि! हा मदालिङ्गनलालसे हा मधुरभाषिणि, क्वाऽसि क्वाऽसि! प्रिये क्षम्यतां क्षम्यतां परमापराधी अहमस्मि। सुन्दरि चुम्बनाय वलिताधरायास्ते चिबुकग्रहणं, कण्ठग्रहाय प्रसारितबाहुलतायाः कूर्परनिरोधः प्रेम्णापातुमिव च स्थगितनयनाया असाम्मुख्यम् अ-

धुनाऽपि दारयतीव मे हृदयम्। (विचार्य) अथ प्रिये किमिव करोमि अधुना केवलं त्वत्चमेव शरणम्।

बन्धु०।—१ का विअ कधा मणस्स ;

सु०।—सखे न किमवि।

ब०।—२ ता किं मह वि सम्मुहे अकधणीयं किं वि ?

सु०।—सखे,

चित्ते चिन्तनमात्रेण प्रसभं प्रियया हृते।
शून्या इव दिशः पश्यन् कः कस्मै किं निवेदयेत्॥

(चक्षुषी सम्मील्य)

प्रिये।

* स्वयं प्रकाशसे तन्वि सर्वत्र च निरीक्ष्यसे।
नूनं विदधति व्याख्यां सूत्राण्यपि तवैव किम्॥ ४॥

ब०।—३ तहिं का विअ चिन्ता ? सामउदीए सद्धं तु तुह पाणिग्गहो जेव्व सिग्घं होदि।

सु०।—(श्रवणं चित्त्वेव पुष्पाणि) सखे अहमपि वेद्मि यदचिरात् परिणेष्यते सा मया तथाऽपि हृदयं तु मे त्वरयति यत्।

रसाल इव सानन्दं ललितां मालतीलताम्।
कदा तां परिरप्स्येऽहं बालां सामवतीं प्रियाम्॥ ५॥

---

१ केव कथा मनसः ?

२ तत् किं ममाऽपि सम्मुखे अकथनीयं किमऽपि ?

३ तर्हि केव चिन्ता सामवत्या सार्द्धं तु तव पाणिग्रह एव शीघ्रं भवति।

---

* सूत्राणि ब्रह्मपराणि व्याससूत्राणि, तानि हि स्वयम्प्रकाशं सर्वव्यापकं ब्रह्म व्याख्यान्ति इति स्पष्टम् उक्ते चा।

( पुष्पचयनात् प्रतिनिवृत्यैव ) ता:—ते मकरध्वजधनुषी इव भ्रुवौ, ते जगज्जित्वा निर्मुक्ते तत्प्रतरञ्ज्वे इव अलके, तौ द्योतदनुरागाविव अरुणावपाङ्गौ, तौ मदनाखेटहाटकपीठाविव कपोलौ, तद् युवजनमनोमौक्तिकसंवरणसुवर्णसम्पुटमिव चिबुकम्, स स्नेहसारासार इव वाष्पविन्दुव्रजः, स उष्णश्वासधूसरोऽधरः, ते चपलविशिथिलाः कचाः, सा प्रार्थनाभङ्गमन्थरा गतिः, तौ पटान्तग्रहणाग्रहविकलाङ्गुली करौ, तौ च अनवरताश्रुपातक्षालितकेसरौ कुचौ स्मारं स्मारं खिद्यते, उद्विजते, मुह्यति च मे हृदयम्

व० ।—१ कहिं वि अप्पाणं विसुमरेसि ? ईदिसो जेव्व होदि जुवइजणाणं पणओ।

नेपथ्ये ।—( सारिकास्वरेणेव )

*२ हला पिअसहि कधं हत्थे कवोलविण्णासं कदुअ चिन्तं करेसि ?

उभौ ।—( सचकितं परितो विलोक्य ) क आसां वाचामुदीरकः ?

सु० ।—अप्यभिहितमेतत् कयाऽपि गगनचारिण्या देव्या ?

व० ।—† ३ कोवि घोणो विअ घोणाए लवदि।

१ कथमिव आत्मानं विस्मरसि ? ईदृश एव भवति युवतिजनानां प्रणयः।

२ अयि प्रियसखि कथं हस्ते कपोलविन्यासं कृत्वा चिन्तां करोषि ?

३ कोऽपि घोणीव घोणया लपति।

* कोकिलानुकरणमिति सर्वं सानुनासिकम् अभिनेतव्यम्।

† घोणी शूकरः, घोणा नासा।

( उभौ सतर्कमीक्षेते )

नेपथ्ये।—( पुनस्तदेव )

सु०।—( अवधार्येव ) पश्य पश्य इतो रसालावलम्बिमाधवीजालाच्छन्ना सारिका लपति।

ब०।—१ ( निरीक्ष्य ) सच्चं अदो ज्जेव्व अणुणासिअं ( इति उच्चैर्विवक्षुं मध्ये एवनिरुध्य )

सु०।—निभृतमेव श्रूयतां किमन्यदियं वक्तीति।

( इत्यात्मानमाच्छाद्य उभौ तिष्ठतः )

नेपथ्ये।—( पुनः सारिकास्वरेण )

२ कध तावसुस्सन्तदसणवसणा खिणा विअ लक्खीअसि ?

ब०।—(उच्चैर्वक्तुं यतमानः सुमेधसा वार्यमाणः शनैः) ३ कहिं एसा माणुसी विअ लवदि ?

सु०।—सखे इमाः श्रुतधरा भवन्ति इति तर्कयामि काञ्चिद्विरहविधुरामुद्दिश्य कथयन्त्याः कस्याश्चिदन्तरङ्गसख्या वचनमवधार्य उड्डीनेयम्। तदेव च रटति।

ब०।—४ अवि सामउदीए जेव्व सहीए महुरवअणाए ?

सु०।—सखोभवीति। ( क्षणानन्तरम् ) अवधीयतां किमन्यदपि वक्तीति।

नेपथ्ये।—( पुनस्तेनैव स्वरेण तदेव वाक्यद्वयम् )

ब०।—५ कहिं पुणोवि अम्मे डिअ तं जेव्व कहेदि ?

---

१ सत्यम् अत एवानुनासिकम्।

२ कथं तापशुष्यद्दशनवसना खिन्नेव लक्ष्यसे ?

३ कथमेषा मानुषीव लपति ?

४ अपि सामवत्याएव सख्या मधुरवचनायाः ?

५ कथं पुनरप्यास्रेड्य तदेव कथयति ?

सु० ।—सखे ! मन्ये,

मन्त्रदीक्षां गृहीत्वैषा कस्याश्चिदपि योषितः ।
अरण्ये निर्जने स्थित्वा तपस्यन्त्यनुतिष्ठति ॥ ६ ॥

नेपथ्ये ।—( तेनैव स्वरेण ) १ हा कधं ण सुणोसि ?

सु० ।—(स्वगतम्) अहह वचनेनानेन करतलन्यस्तकपोलतलायाः तापशुष्यद्वदनवसनायाः सख्याः प्रार्थनमशृण्वन्त्यास्तस्या मूर्त्ति-र्लिखितेव मम हृदयालेख्ये। अहह सामवति मदऽर्थमियं वेदना ते ? आः कथमऽद्याऽपि न भिद्यते मम वज्रहृदयम् ( इति व्याकुलीभवति )

व० ।—(अवलोक्य)२ कधं एसा क्खुद्दकालवत्ताई विग्र वि तह कलकलं करेदि जा सुणिअ व्वाउलो विअ जादो मे पिअवअस्सो सुमेधा ता जइ एदाए मत्थअं ण फोडअम्मि ता णिप्फलं क्खु जीइदं मह लउडहदअस्स। (इति लगुडमुत्थाप्य सारिकां जिघांसति। सुमेधा रुणद्धि कलकलमाश्रुत्य सारिकोड्डीयत इव )

सु० ।—( साक्रोशम् ) अरे जाल्म कथमिव निवारितेनाऽपि त्वया तथा चेष्टितं यथा पलायिता मे अन्तरङ्गिणी सखीव रहस्यभाषिणी सारिका ?

व० ।—३ अध चिट्ठ चिट्ठ पुणोवि आआरेमि। (लगुडमुत्थाप्य) सारिए सारिए एत्थ एत्थ सारिए, हण्डे हण्डे ओः।

---

१ हा कथं न शृणोषि ?

२ कथमेषा क्षुद्रकालवार्त्तावापि तथा कलकलं करोति यच्छ्रुत्वा व्याकुल इव जातो मे प्रियवयस्यः सुमेधाः। तद् यदि एतस्यामस्तकं न स्फोटयामि तन्निष्फलं खलु जीवितं मम लगुडहतकस्य।

३ अथ तिष्ठ तिष्ठ पुनरऽपि आकारयामि ।................। सारिके सारिके अत्र अत्र सारिके अरे अरे ओः।

सुमे०।—( सन्ताप्य ) अरे मूर्ख तस्मिन् पादपे उपविशन्ती त्वया पुनः क्रूरकोलाहलेन दूरं निर्यापिता। धिक्! ( निःश्वस्य ) अहह वामो विधिः सारिकाद्वाराऽपि मे तत्सन्देशाकर्णनं न सहते अहह,

कदाऽहं कान्ताया नलिननयनायाः करतलं,
गृहीत्वा सानन्दं निजकरतलेनातिरुचिरम्।
सुधापारावाराप्लुतमिवमनः स्वं विरचयन्,
शचीयुक्तं जिष्णुं चिरमुपहसिष्यामि मुदितः।

नेपथ्ये।—( यज्ञदत्तस्वरेण ) कथमेवं विलम्बते आयुष्मान्, सज्जितसकलोद्वाहसामग्रीकः तातवेदमित्रः प्रतिपालयति भवन्तम्।

सु०।—( अवलोक्य ) क एष यज्ञदत्तः? एष आगच्छामि। ( इति निष्क्रान्तौ )

(पटक्षेपः)।—( स्थानं सामवत्या आरामकुञ्जः प्रविशति च तत्क्षणसुप्तोत्थिता विरहमुद्रां नाटयन्ती सामवती सम्मुखस्थिता मधुरवचना सखी च )

मधुरवचना।—१ हलापिअ-सहि कधं अणहिअआ विअ चिट्ठसि, मए कधिदं किंवि ण सुणेसि?

सामवती।—( सशैथिल्यम् ) २ सहि तुए किं कहिदम्।

म०।—३ मए एदं जेव्व कहिदं जा कधं हत्थे कवोलविएणासं

---

१ अयि प्रियसखि कथमन्यहृदयेव तिष्ठसि मयाकथितं किमपि न शृणोषि।

२ सखि त्वया किं कथितम्?

३ मया इदमेव कथितं यत् कथं हस्ते कपोलविन्यासं कृत्वा चिन्तां करोषि? कथं तापशुष्कहृदयनवसना खिन्नेव लक्ष्यसे?

कदुअ चिन्तां करेसि ? कधं तावसुस्सन्तदसणअसणा खिण्णा विअ लक्खोअसि ?

सा० ।—१ तदो मए किं कहिदम् ?

म० ।—२ ण किं वि ।

सा० ।—( निःश्वस्य ) ३ सहि किं कहेमि, मह सुवणे वि पिअस-मागमं ण सहेदि विधी ।

म० ।—४ ता किं सुवणे संगदो पिओ ?

सा० ।—५ सहि कहेमि सव्वं वुत्तन्तम् । ( उत्थाय, उपविश्य, नेत्रे विमृज्य, कचांश्चापसार्य ) हला एदं तु तुए जाणिदं जा, ( संस्कृतमाऽऽश्रित्य )

दुर्लभमऽपि चेदविष्टं, प्रेष्ठं श्रेष्ठं विनाऽऽयासैः ।
वितरति कृतसुखमुद्रां, भद्रां निद्रां विना कोऽन्यः ॥ ८ ॥

म० ।—६ तह ।

सा० ।—७ ता संपड़ि एत्थ ठिदाए मह चिन्तालसासिढिलिदणअ-णाए णिद्दागमो जादो ।

---

१ ततो मया किं कथितम् ?

२ न किमपि ।

३ सखि किं कथयामि मम स्वप्नेऽपि प्रियसमागमं न सहते विधिः ।

४ तत्किं स्वप्ने सङ्गतः प्रियः ?

५ सखि कथयामि सर्वं वृत्तान्तम् । ......... । अयि इदं तु त्वया ज्ञातं यत् ।

६ तथा ।

७ तत्सम्प्रत्यत्र स्थिताया मम चिन्तालसशिथिलितनयना-या निद्रागमो जातः ।

म० ।—१ तदो तदो ।

सा० ।—२ तदो सिविणे मए एदं पेक्खिदं जा मह पाणिग्गहो हो-
दि। तहिं एकदो रिचाइं भणिदुं पउत्तो चउव्वेदिवह्मणसमा-
जो, अण्णदो महुरं गाअन्तो सङ्गीदिअसमाजो, इदो मुणिवर-
णीगणपरिजणो, तदो वरपक्खीअजणो, परिट्ठिदो लक्खिदो।
रअणा वि विलक्खणा मलअमारुदुव्वेल्लन्तबालकदलीदलदो-
लणसीदलस्स परागपुञ्जपिञ्जरिददमदिसामुहस्स मण्डवस्स
पेक्खिदा। *

म० ।—३ तदो ।

सा० ।—४ तदो अणुचिट्ठिदे पुव्वणिओए तादसारस्सुदेण अहं अ-
ज्जउत्ताय णिवेदिदा।

---

१ ततस्ततः ।

२ ततः स्वप्ने मयैतत् प्रेक्षितं यत् मम पाणिग्रहो भवति। तत्र एकत ऋचो भणितुं प्रवृत्तश्चतुर्वेदिब्राह्मणसमाजः, अन्यतो मधुरं गायन्, साङ्गीतिकसमाजः, इतो मुनिवरगृहिणीगणपरिजनः, ततो वरपक्षीयजनः परिस्थितो लक्षितः। रचनाऽपि विलक्षणा मलयमारुतोद्वेल्लद्बालकदलीदलदोलनशीतलस्य परागपुञ्जपिञ्जरितदशदिशामुखस्य मण्डपस्य प्रेक्षिता।

३ ततः ।

४ ततोऽनुष्ठिते पूर्वनियोगे तातसारस्वतेनाहमार्यपुत्राय निवेदिता।

---

* स्वप्ने विवाहावलोकनस्यामङ्गलत्वेपि "व्याधितेन सशोकेन चिन्ताग्रस्तेन जन्तुना। दूराकाङ्क्षेण मत्तेन दृष्टः स्वप्नोनिरर्थक" इति नात्रामङ्गलाशंसा।

म० ।—(सस्मितम्) १ तहिं गच्छ अज्जउत्तस्स घरं किं एत्थ चिट्ठसि ।

सा० ।—२ अलं हासेहिं ।

म० ।—३ सहि तदो तदो ।

सा० ।—४ तदो ( संस्कृतमाश्रित्य )

विप्रैराशीर्वादाः, पित्राऽहं वै मनश्च मयकाऽपि ।
प्राप्ते विवाहपर्वणि, किं किं सखि केन केन नहि दत्तम् ॥८॥

म० ।—५ सच्चं ईदिसं जेव्व पव्वं विश्राहस्स । तदो तदो ।

सा० ।—६ तदो मह पाणिग्गहसुहं अणुभवन्तस्स अज्जउत्तस्स ।

( संस्कृतमाश्रित्य )

* विपुलोद्धारणपटुस्तब्धरोमा हि तत्करः ।
बभौ वाराहहरिवत् स हिरण्याचकम्पनः ॥ १० ॥

७ मह वि ( पुनः संस्कृतमाश्रित्य )

वैवर्ण्यं वदने तथा नयनयोरानन्दवाष्पोदयो,
देहे वेपथुरप्यऽभूत् सखि ततः स्वेदाम्बुविन्दुव्रजः ।
रोमाञ्चः परितोऽपि विस्मृतिरऽथ स्तम्भोऽपि तस्मिन्क्षणे,
कः को न प्रियसङ्गतः प्रभवति प्रायो विकारः प्रिये ॥ ११ ॥

---

१ तर्हि गच्छार्यपुत्त्रस्य गृहं किमत्र तिष्ठसि ।

२ अलं हासैः ।

३ सखि ततस्ततः ।

४ ततः ।

५ सत्यमीदृशमेव पर्व विवाहस्य । ततस्ततः ।

६ ततो मत्पाणिग्रहसुखमनुभवत आर्यपुत्त्रस्य ।

७ ममापि ।

---

* विपुलागद्धरोधाचो···दंष्ट्रीघोणोस्तब्धरोमा···इतिचामरः । सहिरण्यमचं रुद्राचं दानवं च कम्पयतीति तथा ।

स० ।—१ सच्चं भणासि । ( चणानन्तरम् ) तदो ।

सा० ।—( निःश्वस्य ) २ सहि जाव एदं पेक्खामि दाव पिञ्जरपरिट्ठिदाए दासीए धीआए एदाए सारिआए एवं णिट्ठुरं कूजिदं जा मह णिद्दा विहदा । हा कहिं सो मे पिओ ? ( इति कपोले हस्तं विन्यस्य चक्षुषी मीलयति )

स० ।—(समीपलम्बमानपिञ्जरमवलोक्य) ३ अच्चरिअं एदस्स पिञ्जरस्स दुआरं उग्घाड़िअ कहिं गदा सा सारिआ ?
( सामवतीमवलोक्य ) ४ अहह कधं पुणोवि ण सुणेसि । को दे क्खणे क्खणे चेतणत्तणं चुलुकेदि ?
( इति बालकदलीदलेन वीजयति ) ( चणानन्तरं सामवती निःश्वस्य चक्षुषी उन्मीलयति )

स० ।—५ सहि पसीद पसीद फलिदं दे सुवणेहिं ।

सा० ।—६ किन्ति ।

स० ।—७ फलिदं दे सिविणेहिं जा अज्ज दे पडिवञ्छिदेण दुल्लहेण विआहो भविस्सिदि ।

---

१ सत्यं भणसि ततः ।

२ सखि यावदिदं प्रेचे तावत्पिञ्जरपरिष्ठितया दास्याः पुत्र्या एतया सारिकया एवं निष्ठुरं कूजितं यत् मम निद्रा विहता । हा कुत्र स मे प्रियः !

३ आश्चर्यमेतस्य पिञ्जरस्य द्वारमुद्घाट्य कुत्र गता सा सारिका ?

४ अहह कथं पुनरपि न शृणोषि कस्ते चणे चणे चेतनत्वं चुलुकयति ।

५ सखि प्रसीद प्रसीद फलितं ते स्वप्नैः ।

६ किमिति ।

७ फलितं ते स्वप्नैः यदद्य ते परिवाञ्छितेन दुर्लभेण विवाहो भविष्यति ।

सा०।—१ ता किं सच्चं भणासि ?

म०।—२ अध इं ?

सा०।—३ सहि एदेहिं महुरवअणेहिं तुए णिजं णाम सच्चं किदम्। ( इति स्वकण्ठादुत्तार्य हारं ददाति )

म०।—४ सहि अहुणा मण्डवट्ठिदेण तादसारस्सुदेण अहं कहिदह्मि जा तुरिअं भूसणवसणेहिं सिङ्गारिअ एत्थ आणेहि सामवदिं ति ता एदाइं वसणाइं भूसणाइं वि गेण्ह। ( इति वस्त्राणि परिधापयति भूषणानि चाङ्गेषु यथा स्थानं योजयति ) ( सामवती सप्रसादं तामभि तिष्ठति ) ( मधुरवचना सम्मुखे दर्पणं संस्थाप्य हारमर्पयति )

सा०।—( दर्पणे रूपमवलोक्य स्वगतम् )

जन्हुभयादिव गङ्गा, क्वच गिरिगह्वने सुदुर्गेऽस्मिन्।
मुक्तामाला व्याजादाच्छन्नाऽस्तीति मन्येऽहम् ॥ १२ ॥

म०।—( कर्णयोः कर्णपूरावर्पयति )

सा०।—( साङ्गहारं दर्पणेऽवलोकयति )

म०।—( सनाव्यं शिरोभूषणादिकमायोज्य अवलोक्य च ) ५ सहि तुए सदिसी सुन्दरी कावि ण अत्थि।

---

१ तत्किं सत्यं भणसि ?

२ अथ किम्।

३ सखि एतैर्मधुरवचनैस्त्वया निजं नाम सत्यं कृतम्।

४ सखि अधुना मण्डपस्थितेन तातसारस्वतेनाहं कथिताऽस्मि यत् तूर्णं भूषणवसनैः शृङ्गारयित्वाऽऽनय सामवतीमिति तत् एतानि वसनानि भूषणान्यपि गृहाण।

५ सखि त्वया सदृशी सुन्दरी कापि नास्ति।

सा० ।—१ अलं वक्कभणिदेहिं । जहा ।

( संस्कृतमाश्रित्य )

अन्यूनसौन्दर्यसमन्वितामिमाम्,
रूपेण कान्त्या वयसा तथा समाम् ।
दृष्ट्वाऽपि किं वच्मि सखीह दर्पणे,
सामऽद्वितीयामुपहासवत् प्रिये ॥ १३ ॥

म० ।—२ ( स्वगतम ) अहो रूवगव्वो एदाए ।

नेपथ्ये ।—३ अहुणा वि ण सामउदिं गेण्हिअ महुरवअणा आअदा ।

म० ।—( सचकितम् ) ४ सहि अम्हेहिं पलम्बो विलम्बो किदो ता एसो बन्धुजीओ तुवरेदि ।

बन्धुजीवः ।—( प्रविश्य ) ५ सामउदि तादसारस्सुदो मण्डवे तुह उवट्ठिदिं बञ्छेदि ।

म० ।—६ ता किं सव्वं पडिक्किदम् ?

व० ।—७ अध इं ( संस्कृतमाश्रित्य )

एकतो वरोऽस्ति वेदवेदिनस्तथैकतः,
चाऽन्यतो वरस्य बान्धवा विभान्ति भूषिताः ।
पुष्पधूपचन्दनादिवासवासितान्तरः,
केन वर्णनीय एष ते विवाहमण्डपः ॥ १४ ॥

---

१ अलं वक्र भणितैः । यथा ।

२ अहो रूपगर्व एतस्याः ।

३ अधुनाऽपि न सामवतीं गृहीत्वा मधुरवचना आगता ।

४ सखि अस्माभिः प्रलम्बो विलम्बः कृतः तदेष बन्धुजीवस्त्वरयति

५ सामवति तातसारस्वतो मण्डपे तव उपस्थितिं वाञ्छति ।

६ तत् किं सर्वं परिष्कृतम् ?

७ अथ किम् ?

१ ता लहुं गच्छ।

म०।—२ एवं भोदु (इति सलज्जां सामवतीं नाट्येन नीत्वा गच्छति)

द०।—(स्वगतम्) ३ अहो अज्ज महामहूसवो अत्थि ता अहमपि णच्चन्तो गाअन्तो समअं सम्माणइस्सम्।

(इति साङ्गहारं नृत्यन् यथारुचि गायति संस्कृतमाश्रित्य)

आनन्दः परमो मम जातः। आ०।

भुक्तः सुरुचिरमोदकनिचयः सुखमपरं किल नातः। आ०।

वरसुखीयं मञ्जुकञ्चुकं सोत्तरीयपरिधानम्।

प्राप्तं मया सादरं दत्तं बहुलानन्दनिधानम्। आ०॥

मधुमधुरं रमणीविन्यस्तं श्रुतमपि मङ्गलगीतम्।

ही ही भो द्रव्यं च गृहीतं यजमानैरुपनीतम्॥ आ०॥

हाराङ्गदकेयूरमुद्रिकादिकमाप्तं वरशोभम्।

मन्येऽहं मम रूपं जातं दत्तसुरस्त्रीलोभम्॥ आ०॥ १५॥

४ अध एदाइं पड़भूसणाइं गेहं पविसिअ बम्हणिं वि दंसेमि।

(इति गच्छन् प्रतिनिवृत्य सचकितम्) आदु सुमरिदं मण्डवे जेव्व वट्टणीअं मए जा पुणोवि दक्खिणं गेह्निस्सम्।

(नेपथ्ये भिक्षुकस्वरेण किमपि तु इत्यादि गीयते बन्धुजीवो नृत्यति

---

१ तत् लघु गच्छ।

२ एवं भवतु।

३ अहो अद्य महामहोत्सवोऽस्ति तदहमपि नृत्यन् गायन् समयं सम्मानयिष्यामि।

४ अथ एतानि पटभूषणानि गेहं प्रविश्य ब्राह्मणीमपि दर्शयामि।.........। अथवा स्मृतं मण्डपे एव वर्त्तनीयं मया यत् पुनरपि दक्षिणां ग्रहीष्यामि।

नेपथ्ये ।—( अन्यतः सबहुजनरवसाङ्कर्यम् विष्टरो विष्टरो विष्टर इत्यादिमहुवैवाहिकविधिवादोत्तरम् मधुपर्को मधुपर्को मधुपर्क इति सूच्यते )

बन्धुजीवः ।—१ आः समओ एसो गोदाणस्स ता गच्छेमि ।

( इति एकतो निष्क्रान्तः )

भिक्षुकः ।—( अन्यतः प्रविश्य पूर्वगानं समापयति )

नेपथ्ये ।—( स्वाहाध्वनिः )

भिक्षुकः ( पुनर्गायति यथा रुचि )

घटना कापि विधेस्तु विचित्रा ।
अज्ञाता दैवज्ञगणैरपि विपुलविचित्रचरित्रा ॥ घ० ॥
क्व धर्मसिन्धुः क्व च दुर्वासाः क्व च सामवान् सुमेधाः ।
अभूमिमिलित्वाऽखिलं विचित्रं धन्यो धन्यो वेधाः ॥ घ० १६ ॥

बन्धुजीवः ।—( हस्ते फलपोटलिकादिकं बिभ्रत् सपदि प्रविश्य ) २ हो ही भोः एदं सव्वं गेहे रक्खिअ पुणो वि आअच्छामि ( इति जिगमिषन् प्रतिनिवृत्य ) अहो भूअसो भूअसो! ता कहिं गच्छेमि :

भि० ।—स्थिरो भव स्थिरो भव बन्धुजीव ।

ब० ।—३ ता किं अहं वि तुआरिसो भिक्खुओम्हि जो घरे घरे एवं

---

१ आः समय एष गोदानस्य तद् गच्छामि ।

२ इदं सर्वं रक्षित्वा पुनरपि आगच्छामि । ...... । अहो भूयसो भूयसो । तत् कथं गच्छामि ।

३ तत् किम् अहमपि त्वादृशो भिक्षुकोऽस्मि यो गृहे गृहे एवमेवं भिक्षते । त्वं स्थिरो भूत्वा भिक्षस्व अहं पुनः पण्डित ब्राह्मणोऽस्मि अधुना धनी अपि संवृत्तोऽस्मि तद् वृक्ष इव स्थिरो भवितुं न पारयामि ।

एवं भिक्खइ । तुत्रं थिरो भविश्र भिक्ख श्रहं उण परिज्झदबम्हणोम्हि श्रहुणा धणी वि संवुत्तो ग्हि ता रक्खो विश्र थिरो भविदुं ण पारेमि ।

भि० ।—( हसति )

नेपथ्ये ।—

भास्वद्भूषणभूषितः सुवसनः सत्या युवत्या युतो,
रत्याभामितवासभागमदनं विस्मापयन् शोभया ।
श्राशीर्भिः पृथिवीसुरैश्च परितः पोपूज्यमानः परे,
रायात्येष सुमङ्गलैः परिजनैर्युक्तः सुमेधा वरः ॥ १७ ॥

बन्धु० ।—१ श्रहो पेक्खध २ समागदा ज्जेव्व सव्वे ।

नेपथ्ये ।—(वाद्यानि वाद्यन्ते वनितास्वरेण मङ्गलगीतानि च गीयन्ते)

( ततः प्रविशति पटीक्षेपेण सपत्नीकः सुमेधाः सारस्वतो वेदमित्रः परितश्च परीवारः ) ( उभौ उपसर्पतः )

सर्वे० ।—( बधूवरयोरुपरि श्रक्षतान् विकीर्य )

* पद्माननपूजितपादपद्मा, पद्मा तु यां स्तौति स पद्मसद्मा ।
वैकुण्ठनाथस्य बधूवराऽऽभ्याम्, बधूवराभ्यांवरदाऽस्तुनित्यम् ॥१८॥

वेदमित्रः ।—( सारस्वतं हस्ते गृहीत्वा ) श्रार्य भवता पुरःसरहस्तेराऽऽदरप्रकारैस्तथा सत्कृतोऽस्मि यथा प्रतिरोमप्रेमपूरपूरितस्य श्रानन्दासवमत्तस्येव मे किमऽधुना वचनीयमित्यऽपि न स्फुरति । ततोऽपि श्रनुगमनपरिश्रमं तु भवतो न सहे । तत् दूरमागतं परिवृत्यतामधुना ।

---

१ श्रहो प्रेक्षध्वं प्रेक्षध्वं समागता एव सर्वे ।

* यां पद्मसद्मा ब्रह्मा स्तौति सा वैकुण्ठनाथस्य विष्णोर्वधूवरा महिषी पद्मा लक्ष्मीः श्राभ्याम् श्रनयोरर्थे नित्यं वरदाऽस्तु स्पष्टमन्यत् ।

सारस्वतः ।—सखे किं करोमि ।—

पादौ पदं न चलतः, सहचरतां श्रीमतस्त्यक्ता ।

हस्तावञ्जलिबन्धं, शिथिलयितुं नैव पारयतः ॥ १९ ॥

वि० ।—* अहो मर्यादामधुरः प्रेमपूरः प्रेयसः । [ इति परिष्वजति ] [ उभौ वाष्पं पटेन प्रोञ्छतः ]

सामव० ।—[ सवाष्पदृशा पितरं पश्यति ]

सा० ।—( समीपमागत्य तद्वाष्पं पटेन परिहरन् ) पुत्रि अलमौन्मनस्येन सर्वा अपि स्त्रिय एवमेव कियत्कालं कोमलभाषणैर्मातापितरौ विमोह्य परतः पतिगेहं सनाथयन्ति, तन्नाऽत्र कोऽपि नवीनो व्यापारः। अयं चाऽस्मासु विशेषो यत्साधारणगृहिणां वियोगव्याकुलतया धैर्यमुत्सार्यते अस्माकं तु धैर्येण व्याकुलतैव निगृह्यते । तद् गम्यतां श्वशुरालयम् । ( इति शनैर्यापयति )

बन्धु० ।—( उच्चैः ) १ जअदु जअदु किदपुणो अज्जो ।

सार० ।—मन्ये दानसमयसूचकोऽयं जयशब्दः । तद् वितरामि । ( इति विप्रेभ्यो बहुधनवस्त्रादीनि ददाति । )

ब० ।—(कूर्दमानः)२ हो हो भो विउलं धणं अज्ज मए अज्जिदम् ।

विप्राः ।—† प्रभवतु वाञ्छितपूर्तिं, मूर्तिस्फूर्तिर्हरेश्च हृदयेऽस्तु ।

लक्ष्मीश्वरस्य कृपया, लक्ष्मीर्भूयाद् भवद्भवने ॥ २० ॥

सार० ।—( सप्रणाममाशिषो गृह्णाति । )

---

१ जयतु जयतु कृतपुण्य आर्यः ।

२ अहो विपुलं धनमद्य मयार्जितम् ।

---

* अत्र अभिनेतृचातुर्यं सर्वान् गद्गदयति ।

† अत्र पद्ये महाराजश्रीलक्ष्मीश्वरसिंहोप्याशंस्यते ।

वेदमि० ।—भवतु भवान् सुचिरं पूर्णमनोरथः । अचिरादेव चाऽय-
मऽम्बिकया दत्तः पुत्त्रोऽपि जनिं प्राप्य निजेन यशस्याचरणेन
परितोषयतु भवन्तम् । किञ्च ततः ।

* विरचितसुरुचिरकाव्ये, विदुषां सदसि च सदा सदामान्ये ।
लक्ष्मीश्वरः प्रसन्नो, भवतु तरामऽम्बिकादत्ते ॥ २१ ॥

भिक्षुः ।—सत्यम् ।

† प्रभवति गुणविख्याति, र्दारिद्र्यस्य च दरिद्रता भवति ।
किं किं न भवति भव्यं, भगवति लक्ष्मीश्वरे तुष्टे ॥ २२ ॥

वे० ।—[ बहु वस्त्रादीन् वितरति ]

विप्राः ।—अहो धन्यो भवान् । वयमेतदेवाशास्महे यत्,

¶ विद्वद्गुणग्रहणकौतुकमाऽऽभजन्तः,
कल्पद्रुमान् वितरणैः सुचिरं हसन्तः ।
यज्ञैर्वरोपकरणैर्विधिना यजन्तः,
सर्वे भवन्तु धनिका बहुकीर्तिमन्तः ॥ २३ ॥

अस्मिंश्च विदर्भराज्ये,

मित्रेषु प्रीतियुक्ता नयविनययुता राजवर्गे च सर्वे,
सोद्योगा द्रव्यविद्यार्ज्जनविधिरचने बद्धकक्षाश्च धर्मे ।
स्वस्त्रीवर्गे सकामाः परनरयुवतौ क्लीबतामाऽऽचरन्तः,
‡ सत्कार्यानूनमाऽऽर्याभगवतिसुचिरंभक्तिभाजो भवन्तु ॥२४॥

---

* अम्बिकादत्ते अम्बिकया वरद्वारा दत्ते सारस्वतकनिष्ठपुत्रे काव्यरचनाशीले सभामान्ये च विष्णुः प्रसीदतु । अपरपक्षे अम्बिकादत्ते एतद्ग्रन्थकर्त्तरि महाराजश्रीमिथिलेश्वरः प्रसीदतु ।

† अत्रापि पूर्ववदुभयमाशंस्यते ।

¶ आशीर्भिर्नाटकं समापनीयमित्याशीर्भिरुपसंहरति

‡ सत्कार्याः सत्कारार्हाः उत्तमकार्यकारिण्यश्च ।

वेद० ।—एवं सदा मङ्गलमेवाऽस्तु संसारे ।

तथाहि

राजानः प्रभवन्तु नीतिनिपुणा विप्राश्च विद्यायुताः,
सद्व्यापारसमन्विता अपि विशः शूद्रा द्विजासेवकाः ।
लज्जाशीलविभूषिता युवतयो भूमिश्च शस्यान्विता,
ईर्ष्यादम्भविवर्जिता अपि जनाः सर्वे भवन्तु चितौ ॥ २५ ॥

सार० ।—अहमप्येतदाशासे यत्

* कीर्त्तिप्रचयप्रचारक, सुमधुर सद्ग्रन्थकारकांस्तुकवीन् ।
दानैरऽपि बहुमानै, र्नित्यं सम्मानयन्तु भूपतयः ॥ २६ ॥

बन्धु० ।—[ न्टतरन् ] १ मादिसो णिच्चं लड्डुअं भक्खेदु § ॥

[ शनैः शनैः जवनिका पातयति ]

[ समाप्तः षष्ठोऽङ्कः ]

[ ग्रन्थश्च समाप्तः ]

---

१ मादृशो नितरं लड्डुकं भक्षयतु ।

---

* ह्रस्वादिपूर्वोपि लघुः क्वचित्स्यादिति निर्देशात् रान्तसंयोगात् पूर्वस्य लघोर्वा गुरुत्वं यथा " भवतामस्तुप्रीतये " एवं हि अत्रापिप्रथमे पादे यकारस्य लघुता ।

§ ग्रन्थस्य लड्डुकभक्षणे समाप्तिरतिमङ्गलं द्योतयति ।

अथ मिथिलेश्वरस्याशिषः ।

वितरतु सुखमविनाशी,
विश्वेशः प्रणतभक्तपापाशी ।
लक्ष्मीश्वरस्य नृपते-
राशीराशीन् प्रपूरयतु काशी ॥ १ ॥
भूयाच्छुभंयुर्मिथिलानरेशो,
धन्यो वदान्यो मतिमत्सुमान्यः ।
आश्रित्य यं काव्यमिदं विधाय,
गतः कवित्वं किल मादृशोऽपि ॥ २ ॥

ग्रन्थायाशिषः ।

यावद्भास्वरभानुभानुनिकरैर्भूभाग आभासते,
तद्वत्तोयतरङ्गिणीपतिरसौ पाथोधिरुज्जृम्भते ।
श्रीलक्ष्मीश्वरसिंहभूप्रतियशःपूरैः पुरः पूरयत्,
तावन्नाटकमेतदस्तु सहृदामानन्दसन्दोहदम् ॥ १ ॥

सुसाधुवादेन विजृम्भितानाम्,
कृपाकटाक्षैः समुदञ्चितानाम् ।
काव्यं मदीयं रुचिरोचितानाम्,
स्यादास्पदं विज्ञविलोकितानाम् ॥ २ ॥

## प्रार्थना ।

दोषज्ञा अपि विद्वांसः स्वीकुर्वन्तु गुणज्ञताम्
मामकं नाटकं दृष्ट्वा मनःखेदविपाटकम् ॥१॥

सत्स्वप्यनेककविराजकृतेषु भूमौ,
यन्नाटकं विरचितं हठिना मयापि
तद् बालचापलमिदं मम संविभाव्य,
तोषं वहन्तु गुरुवन्मम माननीयाः ॥२॥

ये वै हसिष्यन्ति महानुभावाः,
विलोक्य काव्यं मम सु स्वभावा
जानन्तु ते हास्यरसप्रधानम्,
मदीयमेतत् कवितावितानम् ॥३॥

भ्रमजन्या च्युतिश्चेत्स्याच्छब्दस्यार्थस्य वा क्वचित् ।
तां शोधयन्तु विद्वांसो दयोदयसमन्विता ॥ ४ ॥

## कविनामादि ।

श्रीमद्गौडेन्द्रवंशे हर-चरण-रजः-पूर-पूतान्तरात्मा,
दुर्गादत्ताभिधानः समजनि सुयशोभासिशोभाविशिष्टः ॥
तत्पुत्रः शम्भुपादाम्बुजयुगमधुलिट् तातपादोपसेवी,
व्यासोपाह्वस्तु चक्रे सरससुकवितामम्बिकादत्तशर्मा ॥ १ ॥

इति ।

शिष्योऽस्य ग्रन्थकारस्य नाम्ना श्रीबबुनन्दनः ।
क्वचित् क्वचित् टिप्पणिकां नाटकेऽस्मिन्नचीकरत् ॥

श्रीहरिः पायात् .

# प्राकृतविचित्रशब्दार्थकोषः ।

## अ

अ = च ।

अअं = अयम् ।

अंसु = अश्रु ।

अंसो = अश्वः ।

अङ्कोल्लो = अङ्कोठः ।

अंगुली = अङ्गुरिः ।

अच्चइ, अच्छइ = अस्ति ।

अच्चरिअम् = आश्चर्यम् ।

अच्छरिअम् = "

अच्छेरम् = "

अच्छि, अच्छम् = अक्षि ।

अज्ज = अद्य = आर्य ।

अज्जो = आर्यः ।

अज्जउत्तो = आर्यपुत्रः ।

अट्ठि = अस्ति ।

अट्ठो = अस्थि ।

अट्ठारह = अष्टादश ।

अणिरिणो = अनृणः (शाकुन्तले)

अणिव्वअणीओ = अनिर्वचनीयः

अणुत्तन्तो = अनुवर्त्तमानः ।

अणुवत्तन्तो = "

अण्णेसदि = अन्विच्छति ।

अण्णेसीअदि = अन्विष्यते ।

अण्णारिसो = अन्यादृशः ।

अण्हीअदि = आस्यते (शाकुन्तले)

अत्ता = आत्मा, श्वश्रूः (दर्पणे)

अत्ताणो = "

अत्थ = अत्र ।

अत्थि = अस्ति ।

अदिअत्थम् = अत्यर्थम् ।

अदिमेत्तं = अतिमात्रम् ।

अध = अथ ।

अध इम् = अथ किम् ।

अन्तेउरम् = अन्तःपुरम् ।

अप्पणं = आत्मीयम् ।

अप्पा = आत्मा ।

अप्पाणो = "

अप्पुल्लो = आत्मीयः ।

अभिहवीअदि = अभिभूयते ।

अमरिसो = अमर्षः ।

अम्बम् = आम्रम् ।

अम्मो = अहो ।

अम्हारिसो = अस्मादृशः ।

अम्हेहिम् = अस्माभिः ।

अरिहो = अर्हः ।
अरिहओ = अर्हः ।
अरिहइ = अर्हति ।
अरुहो = अर्हः (शाकुन्तले) ।
अरुहओ = "
अरुहइ = अर्हति ।
अलिअम् = अलीकम् ।
अवि = अपि ।
अव्वो = अहो ।
अभिव्वम् = अगिवम् ।
अह = असौ, अदः, ।
अहइम् = अथकिम् ।
अहिमज्जू = अभिमन्युः ।

आ।

आअओ = आगतः ।
आउदी = आवृतिः ।
आणा = आज्ञा ।
आणत्ती = आज्ञप्तिः ।
आणवेदि = आज्ञापयति ।
आणादि = जानाति ।
आणे = जाने । (शकुन्तले)
आदु = अथवा (मृच्छकटिके) ।
आणालक्खम्भो = आज्ञानस्तम्भः ।
आणालखम्भो = "
आपा = आत्मा ।
आपेलो = आपीड़ः ।
आमेलो = " " " ।
आलो = कालः (मालती माधवे)
आसो = अश्वः ।
आसी = आसीत् ।
आसिम् = आसम् ।
आहिजाई, अहि = अभिजातिः ।
आहु = आहोस्वित् (मालती-माधवे) ।

इ

इअ, = इति ।
इच्छइ = इच्छति ।
इङ्गालो = अङ्गारः ।
इणम् = इदम् ।
इणमो = " ।
इत्थिआ = स्त्री ।
इत्थी = स्त्री ।
इदो = इतः ।
इध = इह ।
इमो = अयम् ।
इमिणा, इमेण, = अनेन ।
इसि = ईषत् ।
इसी = ऋषिः ।

ई

ईदिसो = ईदृशः ।

ईसालू = ईर्षावान् ।
ईसुरो = ईश्वरः ।
ईरिसो = ईदृशः ।

उ

उअ = पश्य ( दर्पणे ) ।
उक्केरो = उत्करः ।
उच्छू = इक्षुः ।
उजुओ, उज्जुओ = ऋजुः । (शा०)
उट्ठेहि = उत्तिष्ठ ।
उण = पुनः ।
उणो = „ „ [ यम्
उत्तरिअम्, उत्तरिज्जम् = उत्तरी-
उदु = ऋतुः ।
उस्सवो, ऊसवो, = उत्सवः ।
उस्सुओ, = उत्सुकः ।

ए

एअ, जेव्व, = एव [ एवमेव ।
एअम् एअ, एमेअ, एवं विअ, = ।
एअं, एदं, = एतत् ।
एआरह = एकादश ।
एआरिसो = एतादृशो ।
एक्कं = ऐक्यम् ।
एक्कं, एअं = एकम् ।
एक्कक्कं, = एकैकम् (शाकुन्तले) ।
एण्हिं, = इदानीम् ।
एत्तिअं = एतावत् ।
एद्दहं = ईदृशम् ।
एत्तो = एतस्मात् ।
एत्थ = अत्र । (दर्पणे)
एदं = एतत् ।
एव्वं एव्व, = एवमेव ।
एरिसो = ईदृशः ।

ओ

ओक्खलम् = उलूखलम् ।
ओवासो = अवकाशः ।

क

कइअवो = कैतवम् ।
कइआ = कदा ।
कञ्जआ, कसआ = कन्यका
कणेरू = करेणुः ।
कण्हो = कृष्णः । ।
कत्तो, कदो = कस्मात् ।
कत्थ, कहिं, = कस्मिन् ।
कदुअ = कृत्वा ।
कधम् = कथम्
कम्हारो = काश्मीरः । [रोति ।
करइ, करेइ, ( कर = कृ ) = क-
करेहि, करेसु = कुरु ।
कलम्बो = कदम्बः ।
कलुणम् = करुणम् ।

कमणी = कृष्ण: ।
कस्सवि = कस्यापि ।
कहिम् = क ।
काऊण = कृत्वा ।
काउम्, कादुम्, = कर्त्तुम् ।
काहम्, = करिष्यामि ।
काहावणी = कार्षापण: ।
काहे = कदा । [प्रबोधचन्द्रोदये)
किं खेदम् = किं न्विदम् । (प-
किंसुत्रं, किसुत्रं = किंशुकम् ।
किच्ची = कृति: ।
किणइ, = करोति ।
किर, किल = किल ।
किरिया = क्रिया ।
किरीतो = कृत: ।
किलन्तो = क्लान्त: ।
किलम्मदि = क्लाम्यति ।
किलत्थम् = क्लिष्टम् ।
किलित्तम् = क्लृप्तम् ।
किलेसो = क्लेश: ।
किसं, कसं = कृशम् ।
कीदिसो = कीदृश: । [इति ।
कीलइ = ( कील = क्रीड ) क्रो-
कीस = कथम् = किं । [ खे
कुणइ, = करोति । [प्राकृत पिङ्ग-

कूरपिक्कं = ईषत्पक्वम् ।
केढवो = कैटभ: ।
केत्तिअम् = कियत्, कीदृशम् ।
केद्दहम् = „ „ „ [च्छकटिके)
केरको = (कृतक:) सम्बन्धी (मृ-
केरिसो = कीदृश: ।
केवट्टओ = कैवर्त्तक: ।
केसुअं, कंसुअं = किंशुकम् ।
कोहण्डी, कोहली, कोहडी
= कूष्माण्डी ।
क्खु = खलु ।

खु

खइअम्, खाइअम् = खादितम् ।
खमा = क्षमा ।
खम्भो = स्तम्भ: ।
खल्लीडो = खल्वाट: ।
खाणू = स्थाणु: ।
खासिअं = कासितम् .
खु = खलु ।
खुज्जो = कुब्ज: ।
खोड़ओ = स्फोटक: ।

ग

गंसणम् = ग्रसनम् ।
गग्गरो = गद्गद: ।
गच्छइ (गच्छ = गम्) = गच्छति ।

गच्छम् = गमिष्यामि ।
गड्डहो, गद्दहो = गर्दभः ।
गड्डो = गर्त्तः ।
गदुअ = गत्वा ।
गरिहो = गर्हम् ।
गरु, गरुअम्, गरुई = गुरु,गुर्वी ।
[ रत्नावल्याम् ]
गहिद, गहीद, = गृहीत ।
गहिरम् = गभीरम् ।
गारवम्, गउरवम् = गौरवम् ।
गिह्मो = ग्रीष्मः ।
गिरा = गीः ।
गुरुठो = गृष्टिः ।
गेण्हइ (गेण्ह = ग्रह) गृह्णाति ।
गोला, गोडा = गोदावरी ।

घ

घरम्, = गृहम् ।
घरिणी = गृहिणी ।
घेत्तूण = गृहीत्वा ।
घोलइ ( घोल = घूर्ण ) = घूर्णति ।

च

चउद्दह = चतुर्दश ।
चक्खदि = (चक्ख = चच) = चक्ष- [ ति ।
चडु, चाडु = चाटु ।
चन्दिमा = चन्द्रिका ।
चमरम्, चामरम् = चामरम् ।
चातुलिअम् = चातुर्यम् ।
चिट्ठइ ( चिट्ठ = स्था) = तिष्ठति ।
चिणइ,(चिण = चि) = चिनोति ।
चिन्धम्, चेन्धम् = चिन्हम् ।
चिलादी = किरातः ।
चिहुरी = चिकुरः ।
चोत्थी, चउत्थी = चतुर्थी ।
चोद्दही, चउद्दही = चतुर्दशी ।
चोरिअम् = चौर्यम् ।

छ

छ = षट्
छट्ठी = षष्ठी ।
छट्टवणो = सप्तपर्णः ।
छम्मुहो = षण्मुखः ।
छावओ = शावकः ।
छाहा, छाही, छाआ = छाया ।
छिवइ (छिव् = चिप्) = चिपति

ज

जं = यत् ।
जआ, जइआ = यदा ।
जइवि = यद्यपि ।
जअउणा, जमुणा = जमुना ।

जडिलो, झडिलो = जटिलः ।
जण्णो, जज्ञो = यज्ञः ।
जत्थ = यत्र ।
जधा = यथा ।
जम्पइ (जम्प = जल्प) = जल्पति ।
जसो = यशः ।
जहिट्ठिलो = युधिष्ठिरः ।
जहिम् = यस्मिन् ।
जा, जाव = यावत् ।
जाणइ, जाणदि (जण = ज्ञा) जानाति ।
जाणिदो = ज्ञातः ।
जादिसो = यादृशः ।
जाहे = यदा ।
जीआ = ज्या ।
जीहा = जिह्वा ।
जुज्झइ (जुज्झ = युध्य) = युध्यति
जुहिट्ठिरो = युधिष्ठिरः ( वेणीसंहारे ) ।
जेत्तिअम् = यावत् ।
जेद्दहम् = यादृशम् ।
जदि, जअदि = जयति ।
जेव्व = एव ।
जोण्हा, जोसिणी = ज्योत्स्ना ।
जोव्वणम् = यौवनम् ।

## झ

झत्ति = झटिति [ यति ।
झाअदि, झाअइ (झा = ध्यै) ध्या-
झीणम् = क्षीणम् ।
झुरइ (झुर = क्रुध्) = क्रुध्यति ।

## ठ

ठाअइ, ठाइ (ठाअ, ठा = स्था) ।
= तिष्ठति ।
ठाणम् = स्थानम् ।

## ड

डण्डो = दण्डः ।
डसणो = दशनः ।
डोला = दोला ।

## ण

णं = एनम्, एनाम्, ननु ।
णक्खो, णहो = नखः ।
णच्चइ, णच्चइ णच्च, णच्च = नृत्,
= नृत्यति ।
णवरं, णवरि = केवलम् ।
णवि = नापि ।
णि = निम् ( उपसर्गः ) ।
णिडालं = ललाटम् ।
णिद्दालुः = निद्रालुः ।
णिहसो = निकषः ।
णेइ = नयति ।

णेहि = नियम।

णेउरं = नूपुरम्।

णेड्डं = नीडम्।

णेद्दा, णिद्दा = निद्रा।

णेहो = स्नेहः। [मल्लिका।

णोमल्लिआ, णोमालिआ = नव-

ण्हाअइ (ण्हा = स्ना) = स्नाति।

त

तं, त = तत्।

तंसं = त्र्यस्रम्।

तआणिं = तदानीम्।

तइआ, तआ, तइ = तदा।

तइअं = त्रितयम्।

तणुई = तन्वी।

तत्तहोदी = तत्रभवती (शाकुन्तले)

तत्थ = तत्र।

तधा = तथा।

तम्बं = ताम्रम्।

तम्बो = स्तम्बः। [रति।

तरइ, तिरइ (तर, तिर = तॄ) त-

तह, तहा = तथा।

तहिं, तहि = तस्मिन्, तर्हि, तत्र।

ता, ताव = तावत्, ततः।

तारिसो, तादिसो = तादृशः।

तालवेण्टअं = तालवृन्तकम्।

तिक्खं = तीक्ष्णम्।

तिन्नि = त्रयः, त्रीन्, तिस्रः, त्रीणि।

तिण्हं = तीक्ष्णम्, त्रयाणाम्।

तीअं = तृतीयम्।

तुण्हिओ, तुसिक्की = तूष्णीकः।

तुरिअं = त्वरितम्। [= त्वरयति।

तुवरइ, तुवरदि (तुवर = त्वर)

तेत्तिअं = तावत्।

तेद्दहम् = तादृशम्।

तेरह = त्रयोदश।

तिलोअं, तिल्लोक्कं = त्रैलोक्यम्।

तो, तत्तो, तदो = ततः।

त्ति = इति।

त्थि = अस्ति।

द

दंसइ = दर्शयति।

दंसणं = दर्शनम्।

दह = दश।

दाठी = दंष्ट्री (वेणीसंहारे)

दाढ़ा = दंष्ट्रा।

दाढ़ो = दग्धः।

दाणिं = इदानीम्।

दाव = तावत्।

दाहिणो = दक्षिणः।

दिअरो, देअरो = देवरः।

दिग्रहो, दिग्रसो = दिवसः ।
दिट्ठिग्रा = दिष्टया ।
दिण्णो = दत्तः ।
दिसा = दिशा ।
दीसइ = दृश्यते ।
दीहं = दीर्घम् ।
दुग्रलं, दुऊलं = दुकूलम् ।
दुग्रारं, दुवारं = द्वारम् ।
दुइग्रो, दुदिग्रो = द्वितीयः ।
दुए, दुवे = द्वौ ।
दुधा = द्विधा ।
दुमइ, दूमइ दुम्म, दूम = दू [= दूयते ।)
दुहाइग्रं = द्विधाकृतम् ।
दुहिग्रो, दुक्खिग्रो, = दुःखितः ।
देइ, ( दे = दा ) = ददाति ।
देक्खइ (देक्ख = दृश्) = पश्यति ।
देव्वं = दैवम् ।
दो, दोण्णि, = द्वौ ।
दोहलो, = दोहदः ।
दोहाइग्रं = द्विधाकृतम् ।

## ध

धणालो, धणावन्तो, = धनवान्
धोदा, धीग्रा = दुहिता ।
धीरं = धैर्यम् ।
धुवइ ( धुव = धाव् ) = धावति ।
धुणइ ( धुण = धू ) = धुनोति ।
धूदा = दुहिता ।

## प

पग्रावई = प्रजापतिः ।
पउग्रम् + पाउग्रम् = प्राकृतम् ।
पउत्ती = प्रवृत्तिः ।
पउत्थो = प्रोषितः ।
पउमं = पद्मम् ।
पउरिसो = पौरुषम् ।
पच्छा, = पश्चात् ।
पट्टणं = पत्तनम् ।
पडइ ( पड = पत् ) = पतति ।
पडि = प्रति । [न्तले··· )
पडिच्छिग्र = प्रतीष्य । ( शाकु-
पडिट्ठिदो = प्रतिष्ठितः । ”
पढमो, पढुमो = प्रथमः ।
पण्णरहो = पञ्चदशः ।
पण्णासा = पञ्चाशत् ।
पण्हा, पण्हो = प्रश्नः ।
पत्तो = प्राप्तः ।
पत्थरो, पत्थारो = प्रस्तरः ।
पदिणी = पत्नी । ( शाकुन्तले )
पदुमं = पद्मम् ।
पम्हो = पक्ष्म ।

पलित्तो = प्रदीप्तः ।

पलङ्को = पर्यङ्कः ।

पल्लाणं = पर्याणम् ।

पल्लत्थं = पर्यस्तम् ।

पवत्थो, पओट्ठो = प्रकोष्ठः ।

पहुदि = प्रभृति ।

पहो, पधो = पन्थाः ।

पअडं, पाअडं = प्रकटम् ।

पाउसो = प्रावृड् ।

पाऊण = पीत्वा ।

पाराओ, पारावओ = पारावतः

पारेमि = पारयामि ( शक्नोमि )

पासो = पार्श्वः ।

पि = अपि ।

पिआ, पिअरो = पिता ।

पिक्कं = पक्वम् ।

पुच्छइ, ( पुच्छ = प्रच्छ ) = पृच्छति ।

पुट्ठो, पुट्ठं = पृष्ठम् ।

पुणो = पुनः ।

पुरिल्लं = पौरस्त्यम् ।

पुरिसो = पुरुषः ।

पुलोअइ ( पुलोअ = दृश् [ विलोक ] ) = पश्यति, विलोकयति ।

पुहवी = पृथिवी ।

पेक्खइ ( पेक्ख = दृश् [ प्रेक्ष ] ) = पश्यति, प्रेक्षते ।

पेण्डं, पिण्डं = पिण्डम् ।

पेम्मं = प्रेम ।

पेरन्तं = पर्यन्तम् ।

पोक्खरो = पुष्करः ।

पोत्थओ = पुस्तकम् ।

## ( फ )

फंसो, फरिसो = स्पर्शः ।

फरुसो = पुरुषः ।

फलिहा = परीखा ।

फलिहो = परिघः ।

फासो = पार्श्वः । (मालतीमाधवे)

## ( भ )

भअं, भवं = भवान् ।

भअप्पई = बृहस्पतिः ।

भअव = भगवान् ।

भट्टा = भर्त्ता ।

भणदि, भणादि ( भण = भण ) = भणति ।

भरहो = भरतः ।

भविअ = भूत्वा ।

भवे = भवेत् ।

भाअइ ( भा, भाअ = भि ) = बिभेति ।

भाश्रा, भाश्ररी = भ्राता।

भाणं, भाश्रणं = भाजनम्।

भिसिनी = विसिनी।

( म )

मंसू, मस्सू = श्मश्रु।

मइलं = मलिनम्।

मउडं = मुकुटम्।

मज्झण्हो = मध्याह्नः।

मणंसिणी = मनस्विनी।

मत्थं = मस्तम्।

मरिसइ, मरिसेइ (मरिस = मृष्) = मर्षयति।

मसाणं = श्मशानम्।

महुश्रं = मधूकम्।

महेसी = महर्षिः।

माश्रन्दो, माइन्दो = माकन्दः।

माउश्रो = मातृकः।

मासं = मांसम्।

माहप्पं = माहात्म्यम्।

मित्रो, मित्तो = मित्रम्।

मिव = इव।

मिलाणं = म्लानम्।

मुश्रइ, मुञ्चइ ( मुश्र = मुच् ) = मुञ्चति।

मुइङ्गो = मृदङ्गः।

मेत्तं = —मात्रम्।

मोत्ता = मुक्ता।

मोरो = मयूरः।

मोहो = मयूखः।

म्हि, म्हो, म्ह = अस्मि, स्मः।

( र )

रश्रणं, रत्तं = रत्नम्।

रणं = अरण्यम्।

—रह = दश। (त्रयोदश = तेरह)

राई, रत्ती = रात्रिः।

राश्रउलं, राउलं = राजकुलम्।

राएसी = राजर्षिः।

रुक्खो = वृक्षः।

रुत्रं, रुश्रं = रुदितम्।

रुन्धइ ( रुन्ध = रुध् ) = रुन्धति।

रुप्पं = रुक्मम्, रूप्यम्।

रुप्पिणी = रुक्मिणी।

( ल )

लग्गइ ( लग्ग = लग् ) = लगति

लच्छी = लक्ष्मीः।

लट्ठी = यष्टि।

लहुई = लघ्वी।

लेहा = रेखा। ( प्रहसने )

लोणं = लवणम्।

लोत्तं = लोप्त्रम् ।

लोद्धओ = लुब्धकः ।

( व )

व = इव ।

वइल्लो = वलीवर्द्दः । ( मृच्छकटिके )

वक्खाणं = व्याख्यानम् ।

वंकं = वक्रम् ।

वच्चइ ( वच्च = व्रज ) = व्रजति ॥

वच्छो = वत्सः, वृत्तः, वत्तः ।

वज्जदि ( वज्ज = पद् ) = पद्यते ।

वट्टइ ( वट्ट = वृत ) = वर्त्तते ।

वड्ढइ ( वढ = वृध् ) वर्धते ।

(वन्धइ वन्ध = बध्) = बध्नाति ।

वम्महो = मन्मथः ।

वम्हञ्जो, वम्हणो = ब्राम्हणः ।

(२) वम्हा, वम्हणो = ब्रह्मा ।

(१) वम्हणो = ब्राम्हणः ।

वरइ ( वर = वृ ) = वृणोति ।

वरिसो = वर्षः ।

वलटी = वडभिः, वलभिः ।

वलियं = वलीयः । (शाकुन्तले)

वसही = वसतिः ।

वहिणी = भगिनी ।

वाआ = वाक् ।

वारह = द्वादश ।

वावडो, वावुदो = व्यापृतः ।

वाहा = वाहुः ।

वाहित्तं = व्याहृतम् ।

वाहो, वप्फो = वाष्पः ।

वि = अपि ।

विअ = इव ।

विअड्डो = वितर्द्दिः ।

विअणा, वेअणा = वेदना ।

विआणो = व्यजनम् ।

विउदं = विवृतम् ।

विच्छड्डी = विच्छर्द्दिः ।

विज्जुली, विज्जु = विद्युत् ।

विञ्छुओ = वृश्चिकः ।

विज्जो, विण्णो = विज्ञः ।

विलिअम् = व्यलीकम् ।

विसणं = व्यसनम् । (वेण्याम्)

विहलो = विह्वलः ।

विहप्पदी, महप्पदी = बृहस्पतिः ( रत्नावल्याम् )

विओ = द्वितीयः ।

वीरिअं = वीर्यम् ।

वीसई = विंशतिः ।

वीसत्थो = विश्वस्तः ।

वीसद्धो = विश्रब्धः ।

वीसम्भो = विश्रम्भः ।

वीसासो = विश्वासः ।

वुज्झ [ वुज्झ = बुध् ) = वुध्यते ।

वुच्चदि = उच्यते ।

वुड्ढो = वृद्धः ।

वेअ = एव ।

वेच्छम् = वेत्स्यामि ।

वेडिसो = वेतसः ।

वेण्हु = विष्णुः ।

वेत्तूण = विदित्वा ।

वेभालो = विह्वलः ।

वेलुरिअं = वैदूर्यम् ।

वेल्लो = वल्लिः

वोच्छं = वक्ष्यामि ।

बोरं = वदरम् ।

व्रन्दं, बन्दं = वृन्दः ।

व्व = इव ।

( स )

सअडो = शकटः ।

सअहुत्तं = शतकृत्वः ।

सैरं = स्वैरम् ।

से, सआ = सदा ।

सक्कणोमि = शक्नोमि ।

सज्जइ, सज्जेदि [ सज्ज = सृज, सज्ज ] = सृजति ।

सज्जो = षड्जः ।

सज्झसं = साध्वसम् ।

सढा = सटा ।

साणिअं = शनैः ।

सणेहो = स्नेहः ।

संठविअं, संठाविअं = संस्थापितम्

सण्हं = श्लक्ष्णम् ।

सद्दावेदि [ सद्द = ह्वे, शब्दाय ] = ह्वयते [ शब्दायते ] ।

सद्दालो = शब्दवान् ।

सप्पुरिसो = सत्पुरुषः ।

सम्पदि, सम्पदं, सम्पडि, सम्पडं = सम्प्रति, साम्प्रतम् ।

सम्मद्दो = सम्मर्दः ।

सरदो = सरत् ।

सरिआ = सरिता ।

सरिच्छं, सरिक्खं = सदृक्षम् ।

सरिसो = सदृशः ।

सलाहा = श्लाघा ।

सवरिआ = सपर्या ।

सव्वज्जो, सवण्णो = सर्वज्ञः ।

सहस्सहुत्तं = सहस्रकृत्वः ।

सारिच्छं = सदृक्षम् ।

सि = असि ।

सिंघो = सिंहः । [ शाकुन्तले ]

सिढिलो = शिथिलः ।

सिणिद्धो = स्निग्धः ।

सिणेहो = स्नेहः।
सिरी = श्रीः।
सिलिट्ठं = श्लिष्टम्।
सिविणो = स्वप्नः।
सिभरो = शीकरः।
सीसम् = शीर्षम्।
सीहो = सिंहः।
सुउरिसो = सुपुरुषः।
सुणइ [ सुण = श्रु ] = शृणोति।
सुणादु = शृणोतु।
सुन्देरं = सौन्दर्यम्।
सुमरइ, सुमरेदि, [सुमर = स्मृ] स्मरति।
सुमरो = स्मरः।
सुवइ, सुअइ [ सुव = स्वप् ] = स्वपिति।
सूरो, सुज्जो = सूर्यः।
से = तस्य, तस्याः।
सेज्जा = शय्या। [ सा.दर्पणे. ]
सेन्दूरं = सिन्दूरम्।
सेवा, सेव्वा = सेवा।
सोअमल्लं = सौकुमार्यम्।
सोऊण = श्रुत्वा।
सोच्छं = श्रोष्यामि।
सोण्हा = स्नुषा।
सोत्तं = स्रोतम्।
सोत्थि = स्वस्ति।
सोमालो, सोमारो = सुकुमारः।
[ हैमचन्द्रे प्रायः ]
सोरिअं = शौर्यम्॥
सोस्सं = शुश्रूषम्।

( ह )

हं = अहम्।
हंसो = हंसः।
हञ्जे = [चेटीसम्बोधने अव्ययम्]
हण्डे = [नीचासम्बोधनेऽव्ययम्]
हद्धी = हाधिक्।
हरं = गृहम्।
हरिसो = हर्षः।
हला = [ सखीसम्बोधनेऽव्ययम् ]
हलिओ, हालिओ = हालिकः।
हविं = हविः।
हिअअं = हृदयम्।
हिओ = ह्यः।
हित्थं = त्रस्तम्।
हिदिआमि = जिह्रेमि।
हिरी = ह्रीः।
हीमाणहे = [ आश्चर्यवाचकम् ]
हीरइ, हीरीअदि = ह्रीयते।
ही ही भो = [ हास्यवाचकम् ]

हु = खलु ।

हुवदि, हवदि, होदि [ हु, हव, हुव = भू ] = भवति ।

हूअं = भूतम् ।

होदु = भवतु ।

इति ।

# शुद्धिपत्रम् ।

| पृष्ठे | पङ्क्तौ | इदम् | एवमुचितम् |
|---|---|---|---|
| १ | ५ | चन्द्राङ्कितकलजटं किं | भाले कलितविधुखण्ड |
| ,, | १० | शंसिसो | शंसिनो |
| २ | ७ | तै | तैः |
| ३ | १८ | नै | नैः |
| ५ | १३ | बिब्बो । | सबिब्बो |
| ,, | ,, | टु | तु |
| ६ | १ | ब्बम् | ब्बं |
| ,, | २ | णम् | णं |
| ,, | ६ | साज्जन | साञ्जन |
| १० | ५ | एतस्स | एदस्स |
| १५ | ८ | वत्स | वत्सु |
| ,, | १२ | ष्णु | श्नु |
| १८ | ६ | ष्फ् | ष्क् |
| ,, | २३ | मत्र | मन्त्र |
| २१ | १० | त्स | त्म |
| ,, | २५ | न रमणी | नरमणी |
| २४ | ८ | स्वर्गे | स्वर्गौ |
| ,, | १६ | । | ) |
| २६ | १७ | समः | सामः |
| २८ | ११ | फफ | फफ् |
| ,, | २२ | हता | हताः |
| ,, | ,, | वानरेण | ब्राह्मणवानरेण |
| ३१ | १७ | वद्दम् । | वद्दं ) |

| पृष्ठे | पङ्क्तौ | इदम् | एवमुचितम् |
|---|---|---|---|
| ३६ | २० | पिञ्चर | पिञ्जर |
| ३७ | १० | वन | वन्य |
| ३८ | २२ | सङ्गतां | सङ्गतां |
| ३९ | ६ | न— | न |
| ,, | १० | । | ) |
| ४० | १४ | साङ्ग | साङ्ग |
| ४१ | ३ | तत्र भवता | देवेन |
| ४८ | ११ | । | ( |
| ,, | १६ | स | य |
| ,, | ,, | । | २ |
| ४९ | १३ | क्रुद्दो | २ क्रुद्दो |
| ,, | २५ | शामयितुम् | शमयितुम् |
| ५१ | १ | बद्धम् | बद्धं |
| ५३ | १८ | धर्त्ता | धूर्त्ता |
| ५४ | २ | राज | राष्ट्र |
| ५६ | ८ | प्रिवशामः | प्रविशामः |
| ५७ | १९ | बलभीख्या | बलभीख्या |
| ६० | १७ | कलकल | कलह |
| ,, | २५ | कार्यण्यं | कार्पण्यं |
| ६६ | १६ | एवमेव ] | ] एवमेव |
| ६७ | ५ | तृयाः | त्याः |
| ६९ | २४ | इव | इय |
| ७० | ७ | पौनःपुन्येनाम्रेडा । | आम्रेडा । |

| पृष्ठे | पङ्क्तौ | इदम् | एवमुचितम् |
|---|---|---|---|
| ७० | ११ | तां | तस्याः |
| ,, | २१ | तत्राख्यान्ति | तिघोषयन्ति |
| ७१ | १० | दुर्दमनीया | दुरन्तपूरा |
| ,, | १३ | स्थकितौ | स्थगितौ, |
| ७२ | १२ | । | ] |
| ७३ | ४ | तिं | तीं |
| ७५ | १५ | यथा | यथा |
| ७६ | १५ | गर्लिं | गर्लं |
| ,, | १६ | घो | घो |
| ,, | २१ | पुष्पौर्धैर्ह | पुष्पैः सा ह |
| ८१ | ५ | मन्थ | मन्ये |
| ,, | २४ | किञ्चितम् | किञ्चितम् । |
| ८३ | १२ | जन | र्जन |
| ८६ | १४ | त्वजन् | तरजन् |
| ,, | २२ | लज्जसे | लज्जसे |
| ,, | २३ | रत् | रम् |
| ८७ | १० | णिज्जण | णिज्जण |
| ८८ | १४ | करणीयं | करणीयम् |
| ९४ | १३ | सम्प्रेत्येव | सम्प्रत्येव |
| ९८ | २ | अप्यावयोः | अप्यावयोः |
| १०१ | १२ | मन्त | मत्त |
| ,, | १३ | झञ्झा | झञ्झा |
| १०३ | २ | ,, | ,, |
| ,, | ११ | ,, | ,, |
| ,, | १४ | ,, | ,, |

| पृष्ठे | पङ्क्तौ | इदम् | एवमुचितम् |
|---|---|---|---|
| १०४ | १८ | । | ( |
| १०५ | २ | विधा | विधया |
| १०६ | १० | राजा | ( राजा |
| ,, | १३ | सभा | समा |
| ,, | २३ | हृदये | हृदयम् |
| १०८ | २ | कोपं | कोपं |
| ११० | ४ | म | भि |
| ,, | १८ | ह्व | ह् |
| ११२ | ५ | ।* | । |
| ११३ | ८ | धैंर्यम् | धैर्यम् |
| ११५ | १७ | । | ) |
| ,, | २० | अ— | आ- |
| ११८ | ७ | प्नभू | प्रभू |
| १२१ | १८ | मुदिरा | सुदिर |
| १२३ | ४ | किमवि | किमपि |
| ,, | २४ | व्याख्यान्ति | निरूपयन्ति |
| १२४ | १० | वि | विश्र |
| १२६ | १८ | ओः | श्री |
| १२७ | १३ | पट | पटी |
| ,, | १८ | विएणासं | विसासं |
| १२८ | ८ | वुत्तत्तम् | वुत्तन्तं |
| १३२ | ३ | किदम् | किदं |
| १३४ | ५ | स्सम् | स्सं |
| १३६ | २२ | स्तो | स्तौ |

श्रीः

## पश्यत परिचिनुत च ।

### ( विशेषोयंत्वतोऽन्येयो व्यवस्थापकतः स्वयं )

**खड्गविलास यंत्रं**—मोहमय्यादिविविधविवेचककार्यकुशलयंत्राण्यस्य (मुद्रण-कार्यस्य) गणनायां विशेषतः प्रथमस्मरणीयानि स्युः पूर्वं, परंत्वेतदपि स्वोद्यमदक्षतया साहस शालितया च ग्रंथकर्तृणां मुद्रणेप्सूनां वा आधुनिकं सप्ताष्टवर्षतो विजृंभितमपि शीघ्रं समुचितकार्यकरं च सौंदर्ये सौष्टवे सौकर्ये शुद्धतायां च न द्वितीयमत्र विहारे ( प्रांते ) समुपलभ्येत केनापि विद्याविषयलोलुपेन ।

अतएव सर्वैरेतद्विषयव्यावृत्तिमाद्भिर्मतिमद्भिरिदमवधेयंप्रथमं ।

**श्रीक्षत्रियपत्रिका**—(मासिकपत्रिका) खड्गविलासानुगामिनी सहचरीयं तान् वीरवर्यधुरीण शौर्यौदार्यसौजन्यवद्राजन्यवंशावंतसंविप्रयान् विविधैर्विद्वन्मान्यैरनेकयत्नत उपार्जितैरर्थगभीरवीरचरितैः श्री रामचरित्रादिभिर्धर्माख्यानैर्व्यावहारिकान्वीक्षिक्या-दिवीक्षकैर्विषयैः प्रत्येकं विचित्रवपुषी काव्यशृंगाराद्यलंकृता विद्योतयंती समुदेति ।

प्रापणव्ययादिभिः सह केवलं मूल्यं १॥) मुद्राः.

**श्रीहरिश्चन्द्रकला**—भारत्याभारतभूषण भारतेंदु भाषाकालीदास (काशीवासि) श्रीहरिश्चंद्र करकमलिनीकलितांगुलीगतलेखनीलिखित ग्रंथानां संग्रहः, 'तदीयं नामांकितानन्यवीरवैष्णव' तदीयजीवनसर्वस्वंवा,--खंडशःप्रतिमासं विकासमाना ।

प्रथमभागः पूर्णो 'नाटकावली' नाम्नोनविंश ग्रंथ संग्रहः प्रापणव्ययेनसह ४।≡) मुद्राविनिमयत आप्यः.

एवमेवैते ग्रंथाः सर्वविषयका आमुद्र्यंते मासिकपत्रिकारीत्या. वार्षिकं मूल्यं ६॥।)

व्यवस्थापकः साहबप्रसाद सिंहः